'पुंवच्छक्तिमत्वात्कूटस्थोऽक्षर उच्यत' इतिवत्सत्त्वान इति पुंल्लिङ्ग निर्देशः । तेभ्य इति वा सहस्राक्षस्येन्द्रस्यायो लाभः । तदस्मिन्वृद्ध्यायलाभशुल्कोपदा-दीयते इत्यत्र व्याख्याने ग्रामादिषु स्वामिग्राह्यो भाग आय इति लाभविशेषे स्वामिनिष्ठे कथित इन्द्रस्य स्वर्गस्वामित्वादाययोग्यतास्तीत्यायो यस्येति संभवति । उत्तरत्र सामान्यलाभेऽपि षंडे सार्थादिशब्दवत्ज्ञेयः । आयः शुभावहादृष्टं वा यस्य तत्संबुद्धिर्वा । एवमेव नीलग्रीवायेत्यपि ज्ञेयम् ॥ ९ ॥

**प्रमुंच धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः पराता भगवो वप ॥ १० ॥**

अथ प्रकृतमनुसरति ॥ प्रमुंचेति ॥ हे भगवन् पूज्य राम ते धन्वनः धनुषः आर्त्नियोः कोट्योः । आर्तिः पीडाधनुष्कोट्योः, मौर्वीज्येत्युभयत्र चामरः । आर्तिरिवार्त्निः, आर्त्नियोरित्यत्र वर्णागमन्यायेन यकारनकार-योरागमश्छान्दसः। ज्या मौर्वी । तयोः सुबाहुमारीचयोः विषयसप्तमीयम् । तद्विषये प्रमुञ्च आरोपय । सुबाहुमारीचविषये । धनुःकोट्यारोपितगुणको भवेति प्रार्थयामासेति तात्पर्यम् । हे राम ते तव हस्ते करे याः इषवो बाणाः ताः परापरेषु । पूर्ववत्सुप्लोपाकारौ ज्ञेयौ, प्रमुञ्चेत्यावृत्तिः । बाणप्रक्षेपानन्तरं भाविकार्यमाह ॥ **वपेति** ॥ टुवप उद्गिरणे अन्तर्णीतण्यर्थः । ततःवापय पातय भूमावितिशेषः तमसीति वा । यद्वा **वप** क्षिप ॥ १० ॥

**अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे । निशीर्यशल्यानां मुखाशिवो नः सुमना भव ॥ ११ ॥**

अधुनापि गाधिजो नागाधशक्तेर्दुःसाधोऽसाधूनां वध इत्याह ॥ **अवतत्येति । हे सहस्राक्ष** बहुनेत्र । अनेन मायावियुद्धसन्नद्धे सर्वत्र नेत्रेण भाव्यमिति सूचयति । त्रिनेत्रसेवकबलकबलनायानन्तनेत्रीभवनेन शुभावननं भगवत उचितमिति वा सूचयति ॥ त्वं **धनुः** शार्ङ्गम् । **अवतत्य** सज्यं

कृत्वा । शल्यानाम् । षष्ठी तृतीयार्थे । शल्यैः विशिखैः करणैः मुखामुखानि परेषामितिशेषः । निशीर्य खण्डयित्वा नोऽस्मद्विषये सुमनाः ससौमनस्यः सन्, शिवो मङ्गलरूपी मङ्गलप्रदो वा भव । रणे बाणसरणसमये तत्क्षणे किं मया कार्यमित्यतोऽक्षयेषुत्वं तवेषुधेरित्याह । **शतेषुध** इति । शतमिषवो यस्मिन् स शतेषुरिषुधिः । स धीयते ध्रियते स्कन्ध इति तत्संबुद्धिः । यद्वा शल्यानां बाणानां मुखामुखैः निशीर्य परानिति शेषः । धनुस्तत्येति वान्वयः। तत्य आततज्यं कृत्वा, विशीर्येत्यादि प्राग्वत् । अशिवो वैरिघोररूपः भव । नोऽस्मान् सुमनाः सन् त्वमव पाहीति वा, शिवोन इति वैकं पदम् । शिवो रुद्र ऊनो न्यूनगुणोऽधम इति यावत् । यस्मात्स तथा, स त्वमिति वा तत्येत्यत्र छान्दसो ल्यप् ॥ ११ ॥

**विज्यंधनुः कपर्दिनो विशल्यो बाणवाँ२ उत ॥ अनेशन्नस्येषव आभुरस्य निषङ्गधिः ॥ १२ ॥**

[1]अन्धकारेरधिको भवांस्त्वदायुधानां तदायुधवरीयस्त्वमित्याह ॥ **विज्यमिति** ॥ कपर्दिनो जटाजूटवतो रुद्रस्य धनुः विज्यं विगता ज्या सिंजिनी यस्य तत् भवतीति शेषः । रणे वैरिणा कृतगुणोऽपि पिनाकिनः पिनाको भवतीति तव धनुश्च नच केनचिच्छिन्नगुणं कदाचिदपीति भावः । उत अनन्तरं बाणवान् । बाणा अस्मिन्सन्तीति बाणवानिषुमानिषुधिरिति यावत् । सोऽपि विशल्यः संक्षीणबाणो भवतीत्यर्थः । अत एव अस्य रुद्रस्येषवो बाणा, अनेशन् न समर्थाः त्रिपुरादिरिपुपराभवकरणपटवो नेत्यर्थः । अस्य रुद्रस्य निषंगधिः निषङ्गा बाणा धीयन्ते यत्रेति । गुणमध्यप्रदेशः । सोऽपि नष्ट इतिशेषः निषंगधिरित्यत्र थस्यधः छांदस बाहुलकत्वात् । निपूर्वात् षंज सङ्गे इत्यस्मात् नौ षंजेर्घथिन्निति घथिनि चजोरिति जकारस्य गकारे उपसर्गादित्यादिना षत्वे च निषङ्गधिरिति ।

1. अंधकनामा असुरस्य अरिः रुद्रः

**रथकूबर इति तत्त्वबोधिनी, स प्रकृतानुपयुक्त इति योगेन धनुर्मध्यग्रहणम्। कुत एवं दुरवस्थः स्थाणुरित्यतो हेतुमाह ॥ आभुरिति ॥** अस्य रुद्रस्य **आभुरिति वरः अस्तीति शेषः । स्वस्वामिकस्य पारतन्त्र्याद्युक्तेयमवस्थेति भावः । पारोक्षेण त्र्यक्षाध्यक्षो** भवानिति वदन्मुनिर्मानयामास । परोक्षप्रिया इव हि देवा इति श्रुतितात्पर्यं ज्ञेयम् । यद्वोत्तरत्र जायमानां कथं कथयति ॥ **विज्यमिति ॥** कपर्दिने । रुद्रस्य धनुः जनकौके गतं विज्यं विना रामरूपिणा परमात्मनैव ज्या यस्य तत्, परेऽपि, चापारोपं, रचयन्ति चेच्चित्रं किं [1]पत्रिपत्रस्य तदारोपणमित्यतोऽनन्यसाध्यतां वाह । **विज्यमिति** । विगता अनारोप्येति यावत् । ज्या यस्य तत्, त्वदितरैरिति शेषः । रावणादयोऽपि न पूरणक्षमा इति त्वत्सामर्थ्यं महदितिभावः । उत अनन्तरम् । अस्य कपर्दिनो **निषङ्गधिः ।** [2]कलधौतामलजलमयो बहिः, अन्तः अयस्मयो मध्यनिविष्ट-खड्गकरन्यासस्थानभूतो निषङ्गधिः । इषवोऽपि एते सर्वेऽपि अनेशन् **भवद्वलसहने न समर्था इत्यर्थः ।** एतादृशी शक्ति र्नासंभाविता भवतीत्याह ॥ **आभुरिति ॥** त्वं अस्य रुद्रस्य । आभुःप्रभुः । आङ्प्रार्थः । न विहितो यद्यपि विप्रसं संयोगातिरेकेण भुवोडुस्तथापि छान्दस आङ् पूर्वको ज्ञेयः । योगविभागाद्वेत्याभुरिति भवति । सहस्राक्षः शचीरमणः किं नस्यात्प्रसिद्धे-रित्यतः पाकशासनपाकशासनगुणं भणति । **अविशल्य इति** । अविःसूर्यः । तथात्मकत्वात्सुग्रीवोऽप्यविः, तस्य शल्यवच्छल्य उपद्रवकारी वाली । उत देहपातानन्तरम् । बाणवान्, वानरशरीरं विहाय सुरराट् शरीरवान्भवतीति शेषः । ततश्च दुश्रवनात्मककपिमारणकरणाद्धरिह-यमहीयस्त्वं सिद्धमिति भावोऽवगन्तव्यः । अवयः शैलमेषार्काः । कायो बाणं शरीरं चेत्यभिधानम् । परव्याख्याने अनेके पुनरुक्त्यादयः पूर्वत्रात्रोत्तरत्र च दोषा बहुलमुपलभ्यन्ते तथापि ग्रन्थगौरवमन्थरतया न कथ्यन्त इति ज्ञेयम् ॥ १२ ॥

1. पत्रं वाहनपक्षयोरित्यभिधानात् पत्रिपत्रो गरुडवाहनः, 2. कलधौतामलजलमयः सुवर्णजलधिः अयस्मयः अयोमयः

**या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान्विश्वतस्त्वमयक्ष्मया परिभ्भुज ॥ १३ ॥**

त्वयि धनुर्धुन्वति रक्षसां संक्षयो भवति का कथा मार्गणगणमुचीत्याह ॥ **येति** ॥ हे **मीढुष्टम,** अतिशयेन मीढ्वान्मीढुष्टमस्तत्संबुद्धिः । अतिशायने तमपि इण्, परस्य सस्य षत्वे ष्टुत्वे च रूपम् । अतिशयेन भक्ताभीष्टसेचक राम, ते हस्ते करे । ते धनुर्बभूव, अत्र त इति द्वितीयतेशब्देन जानकीविवाहकाल इव भार्गवाहववेलायामिवान्यदीयत्वशङ्कां कार्मुकस्य पराचष्टे । यदा धनुर्मात्रं धृतं बभूव तदा या राक्षससन्ततिः तत्तनुर्वा, हेतिः, ह इति रावकारिणी ईतिः त्वत्प्रतापाग्निबाधा यस्याः सा हा विषादप्रदा शोकप्रदा वा ईतिः । हा विषाद शुगर्तिष्वित्यमरः । त्वदवलोकनेनैव भस्मीभूता भविष्यन्तीति भावः । तया दग्धया रावणादितन्वा, विश्वतः सर्वतोऽपि दिक्षु विदिक्षु चेत्यर्थः । त्वम् अस्मांस्तावकान् परिभुज परिपालय, न केवलमस्मानपि तु । **अयक्ष्मया** । अयेन पूर्वजशुभादृष्टेन प्राप्ता या क्ष्मा अवनिस्तया सहेति पूर्ववत्, अयः शुभावहो विधिः, क्ष्मावनिरित्युभयत्र चामरः । पूर्वजादृष्टया तव सुधया सह सुधान्धस इव [1]वसुधांधसोऽपि पालयेति भावः । अथवा अयक्ष्मयेति तयेति विशेषणम् । अस्मत्सत्कृति-प्रत्यूहरूपरोगरहितयेत्यर्थः । या सीतया अयक्ष्मया, रावणभयरोगरहितया सह परिभुजेति वा, या हेतिः मीढुष्टम ते हस्ते बभूव । ते हस्ते यद्धनुर्बभूव तया हेत्या तेनेति योग्यतयान्वेति, तेन धनुषा च अयक्ष्मया रिपुभयरोगपरिहारिण्या परिहारकेण च विश्वतोऽस्मान्परिभुजेति वा शस्त्रं च । वह्निज्वाला च हेतय इत्यमरः ॥ १३ ॥

**नमस्ते अस्त्वायुधाया नातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ १४ ॥**

1. वसुधांधसो भूदेवान् ब्राहमणान्

भयातुराणां कृताकृतस्मरणं नास्तीति प्रसिद्धेर्नतानेव तान् पुनः नमनेन तोषयति ॥ **नम इति** ॥ यद्वा भक्तिपरवशः पुनर्नमति । **नम** इति ॥ ते अनातताय त्वदितरैः कोशादनाकृष्टाय । आयुधाय नन्दकाय बाणाय वा, अनेन मुख्यप्राणेनातताय । तदात्मकायेति यावत् ॥ अनाततायेति धनुषो वा विशेषणं ते ॥ **अनातताय** त्वद्व्यतिरेकेण कैरप्यनारोपितगुणाय । तव धन्वने धनुषेऽपि नमोऽस्त्वित्यन्वयः । **धृष्णवे** । असिगृधिधृषिक्षिपेः कुः । परपराभवधृतिमते । ते तुभ्यं नमोऽस्तु । उत त्वन्नमनानन्तरम् । **उभाभ्यां** सीतालक्ष्मणाभ्यामपि नमोऽस्तु । यद्वा उभाभ्यामिति बाहुविशेषणम् । ओः शंभोर्भा कान्तिर्याभ्यां, भस्मासुरभस्मीकरणेन सप्रकाशं कृत्तिवाससं कृतवन्ताविति भावः ॥ १४ ॥

**परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन् निधेहि तम् ॥ १५ ॥**

बलवतां किल भवतां धनुष्मतां किं दुरापमपराधिविरोधिनिराकरण-मित्यतो न वयं तद्धारणेन रणकरणयोग्या अपितु तत्रभवान्भवानेत्या-वेदयति ॥ **परीति** ॥ हे राम ते या हेतिः नन्दकादिकायः ते इषुधिः धनुः शरव्या वा । **अस्मत्** अस्मत्तः । **आरे** दूर एव । नास्मद्धारणविषयता तयोरिति भावः ॥ तमिषुधिं, तामित्यध्याहारः । तां हेतिं च त्वमेव निधेहि स्थापय । अथो अस्मदसामर्थ्यवेदनानन्तरम् । अत एवाधन्वनः न विद्यते धनुर्येषां ते अधन्वानः तान् धनूरहितान् तद्धारणायोग्यान् । अस्मान् अस्मदादीन् विश्वतः सर्ववैरिवर्गात् । तसिल् प्राग्वत् । स स्थापित इषुधिः सा हेतिश्च परिवृणक्तु इतिक्रमभेदेन योजनायां नैकवचनानुपपत्तिदोषः । परिवृणक्तु परिमोचयतु । सर्वानखर्वगर्वानपि वैरिणो हत्वास्मान् मोचयत्विति तात्पर्यम् । अस्मत्कार्याद्युद्युक्तत्वेनैव तव धनुरादिधृतिर्न[1]तावक न तावकं

1. नतावक=नमस्कृतरक्षक-तावक=तावकं भवदीयं

किञ्चिदपि प्रयोजनमिति भावः । अङ्गनिधे मुकुन्दादिनवविधिरूप मुकुन्द राम भवान् विश्वतः अहितं वैरिवर्गम् आरे दूरत एव परिवृणक्तु परिवर्जयतु इति वा । तद्धननमेव वर्जनमिति भावः । भो निधे । तवेति पञ्चम्यर्थे । तव सकाशात् । विश्वतः सामस्त्येन स्वरूपानुकूल्येनेति यावत् । अथो प्रारब्धध्वंसानन्तरम् अपरोक्षज्ञानोदयानन्तरं वा अस्मत् अस्माकं हितं मोक्षादिरूपम् । आरे समीपे अस्तु । विश्वतो वायुना 'विश्वो वायुरुद्राहृत' इत्युक्तेः । [1]'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञये'त्यादेर्वायुरपि प्रार्थनीय इति भावः ।। निधिर्ना शेवधिः । आरादादूरसमीपयोः । तूणीरनिषङ्गा इषुधिद्वयोरिति सर्वत्रामरः ।। १५ ।।

**इति श्रीमन्नवरत्नपुमुत्तमकृतायां शतरुद्रिययथार्थप्रकाशिन्यां श्रीमन्मध्व-समयप्रदर्शितमार्गानुवर्तिन्यां ललितपदमञ्जर्यां यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ।। १ ।।**

**।। श्रीमन्मध्वांतर्गत वेदव्यासात्मक श्री लक्ष्मीहयग्रीवार्पणमस्तु ।।**

1. म.भा.ता. १-७८

॥ श्री लक्ष्मीनारायणाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुराजो विजयते ॥ श्री गुरुभ्योनमः ॥

**नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यंबकाय त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय श्रीशङ्कराय श्रीमन्महादेवाय नमः ॥**

शर्वादिसर्वाह्वयहेतुबाहुल्यवत्वेन तत्तच्छब्दवाच्यो भगवन् भवानेवेति तच्चरितं सङ्कोचेनोदश्चयति ॥ नमस्त इति ॥ हे भगवन् समग्रैश्वर्यादिषड्गुण । यद्वाभूतिवीर्ययशःकान्तिज्ञानेच्छावैराग्यधनैश्वर्यतपआदयोवा भगस्तद्वन् । भगो यत्ने यशोवीर्यार्कभूतिषु । कान्तीच्छाज्ञानवैराग्यधनैश्वर्यतपःसु चेति यादवः । **आय** अकारशब्दवाच्याय । **श्रीमहादेवाय** श्रियो लक्ष्म्याः महादेवो निरतिशयभर्ता, तस्मै । श्रिया रमया महान्देवः क्रीडामोदादिर्यथासंभवं यस्येति वा । दिवु क्रीडा विजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्न-कान्तिगतिष्विति धातुव्याख्यानात् । आन्महतः समानाधिकरण-जातीययोरित्यात्वम् । परपक्षे श्रीमहादेवाय महादेवायेत्यनयोः पुनरुक्तिः स्फुटैव, विश्वेश्वराय सर्वेश्वरायेति पदवत् । तथा च श्रीपतये आयते नमोस्त्विति योजना, अत्र त्रिनेत्रः कुतो न ग्राह्य इत्यतस्तदसंभावित-गुणवाचिविशेषणैस्तं स्तुत्यतो व्यावर्तयति । **विश्वेश्वरायेत्यादिना,** विश्वस्य वायोरीश्वरस्तस्मै । ननु दशरथतरुणीजठराभरणता प्रथिता, तत्कथं जननादिमतो हनुमत उत्तमत्वमित्यतः स्वेच्छोत्सवेन तदलघुपुण्यफलत्वेन तन्मातृता स्वीकारेणेत्याह । **महादेव त्र्यंबकायेति** ॥ महादेव उत्सवादेव । लीलयेति यावत् । तिस्र अम्बाः कौसल्यासुमित्राकैकेयाख्या अम्बाः मातरो यस्य स त्र्यम्बः स कायः तस्य सम्बुद्धिः । त्र्यम्ब एव त्र्यम्बको वा तस्मै । कौसल्यया सहोपचरितमात्रोर्ग्रहणेन नेयमपि जगत्प्रसवितृप्रसवित्रीति

सूचयति। [1]'मयि पतति गरीयानम्ब ते पक्षपात' इतीति रामवचनात् ते अप्यंबे ज्ञेये । 'यतो वा' इत्यादि श्रुत्योदितजगज्जनकत्ववतः । '[2]न शुक्लरक्तप्रभवोऽस्य देहः ।' यथा [3]'नृसिंहाकृतिरि'त्यादेर्न रेतोहेतुको देहः सम्भवतीति समातृकत्वायोगादिति भावः । **त्रिपुरान्तकाय** ॥ त्रिवारं पुरे हिरण्याक्ष-हिरण्यकशिपु-रावण-कुम्भकर्ण-शिशुपाल-दन्तवक्त्रशरीरे ययोद्वयोर्दैत्यजीवयोस्तौ त्रिपुरौ । तयोरन्तकः । नृसिंहरामकृष्णरूपेणेति स तथा । तस्मै । नवद्वारे पुर इति स्मृतेः पुरं देहमणतीति पुराण इति श्रीमद्भाष्याच्च पुरपदं शरीरवाचीति ॥ यद्वा त्रीणि श्वेतद्वीपानन्तासन-वैकुण्ठाख्यानि पुराणि यस्य स तत्सम्बुद्धिः । ननु तारकप्रतारकतातो जगतोंऽतक इति कथा प्रथितेत्यतो मारजनक एव मारक इत्याह अन्तकायेति, प्रलयकाले सकललयकर्त्रे । एतर्हि गर्हित चरित्रगिरित्रभृत्य-दैत्यहत्याकर्त्रे वा । त्रिकः त्रीणि कानि शिरांसि यस्य स त्रिकः । कं वारिणि च मूर्धनीत्यमरः । ततश्च त्रिकस्य त्रिशिरसो रावण पुत्रस्य अग्निर्वन्हिः कालो यमः तद्वत्तापको मार इत्यग्निकालस्तस्मै, कालो दंडधर इत्यमरः । यद्वा त्रिपुरान्तकायत्रिकाग्निकालायेत्येकपदम् । त्रीतिवर्णं पुरा पूर्वमादिभाग इति यावत् । अन्ते प्रान्तभागे कं ककारमयति गच्छतीति त्रिपुरान्तकायम् । त्रिपुरान्तकमयन्ति जानते जना यस्मिन्पदे तत्पदं त्रिपुरांतकायं वा, तत्पदं किमित्यतः श्रुतिः स्वयमेव दर्शयति । **त्रिकेति** ॥ उर्वरितं पूर्ववत् । एतेनापि [4]त्रिशिरसो [5]दमुनोयमुनाप्राचीनजनितुल्य इति फलत्यर्थः । **नीलकण्ठाय** रावणाय । काले पराक्रमाविष्करणकाले अग्निवद्रुद्रः क्रूरस्तापक इति यावत्तस्मै । रावणमारणविषयगृहीत-पराक्रमप्रतापेन तापकायेति भावः । **सर्वेश्वराय** सर्वो रुद्रस्तस्येश्वरः स्वामी तस्मै । 'सर्वो ह्येष रुद्र' इति श्रुतेः । सदाशिवाय । नित्यमङ्गलरूपाय, शिवाय मङ्गलरूपाय सदा सर्वदा नमोस्त्विति वा सदापदमन्वेति ॥

---

1. चंपूरामयणे अयोध्याकांडे -२५ श्लोक2. यमुनाप्राचीनजनितुल्यः यमुनायाः पूर्वं उत्पत्ति यस्य स यमः तस्य तुल्यः3.म.भा.ता. - १२-६०,4. म.भा.ता. - १०-४९,5. दमुनाः=अग्निः (सांतः शब्दः)

**ॐ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो, नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो, नमः सस्पिंजराय त्विषीमते पथीनां पतये नमो, नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो, नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो, नमो भवस्य हेत्यै जगतां पतये नमो, नमो रुद्रायाततताविने क्षेत्राणां पतये नमो, नमः सूतायाहंत्याय वनानां पतये नमो, नमो रोहिताय स्थपतये वृक्षाणां पतये नमो, नमो मंत्रिणे वाणिजाय कक्षाणां पतये नमो, नमो भुवंतये वारिवस्कृतायौषधीनां पतये नमो, नम उच्चैर्घोषायाक्रंदयते पत्तीनां पतये नमो, नमः कृत्स्नवीताय धावते सत्त्वनां पतये नमः ॥ २ ॥**

**ॐ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः ॥ १ ॥**

प्रथमं विश्वरूपता कथिता संक्षेपेणेति तां विस्तरतो दर्शयन् अवतारान्तरकथया सहेदमवतारकथाश्च कथयति नम इत्यादिनानुवाकेन । तत्रादौ वदान्यतादिगुणानाह । **नम** इति ॥ यद्वा प्रथमेन प्रमथप्रथमप्रमथनसमर्थता कथिता । अत्र सर्वत्र सन् भवानेवावतीति गुणानुगुणावयववत्पुरुवपुष्ट्वेन नमति । **नम** इति । हिरण्यं द्रविणं सुवर्णं वा देयत्वेनाभरणत्वेन वा ययोस्तौ बाहू यस्य स तस्मै हिरण्यवदुज्वलबाहवे वा । हर्यतेःकन्यन् हिरचिति कन्यन्प्रत्यये हिरण्यमिति भवति । हिरण्यं द्रविणं वित्तम् । हिरण्यं हेम । सेनानीर्वाहिनीपतिः । दिशस्तु ककुभः । वृक्षः शाखीति सर्वत्र चामरः । अनेन शत्रुतनुत्रजत्रुत्रोटनेन त्विट् बाव्होरिति तन्स्तुतिस्तु तीव्रफलकारिणीति तन्नतिरत्युन्नतिहेतुरिति सूचयति ॥ ननु सेनेनोऽन्योऽस्ति चेदतत्प्रार्थना कथमर्थवतीत्यत आह ॥ **सेनान्य** इति ॥ सेनाः दशरथसेनाः कपिसेना वा नयति प्रेरयतीति तस्मै । सेनानीश्च सेनया सस्वामिना भाव्यं तेन षण्मुखवदित्यतो भवानेव निरवधिकाधिक इत्याह । **दिशांचेति** ॥ न केवलं सेनानीरपित्विति चः समुच्चये । दिशां आशानां पतये स्वामिने । असमासेऽपि छान्दसो घिः । तेन गुणायादेशौ ॥ १ ॥

**नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः ॥ २ ॥**

भगवद्भगवदायुधादिनमनेन मनोऽभीष्टं भवतीति न चित्रमत्र तत्करकरजपरामृष्टेरातरवोऽप्यमरतरुगुरव इति क्षितिरुहान्नमति ॥ **नमोवृक्षेभ्य** इति ॥ ये वृक्षाः तव ते वने वने चरणपरामृष्टाः तेभ्योऽपि नमः । अत एवोक्तं सङ्ग्रह रामायणे[1] । अत्र सन्निहितमात्मकटाक्षं भाग्यदेव्यगमयद्वनवीथीम् ॥ तेन तत्र विलसन्ति समस्तश्रीपदानि रघुनाथपदानि ॥ किंनुतेन सुकृतं कृतमासीन्मार्गजेन तृणगुल्मगणेन ॥ ब्रह्मरुद्रमुकुटोपनिवेश्यं यं परिस्पृशति रामपदाब्जमिति ॥ राक्षससंक्षयघटककपिकटकपोषकत्वं तेषामाविष्करोति ॥ **हरिकेशेभ्य** इति । हरयः कपयः । तेषां कं फलपलाशाशनजन्यसुखं तस्येशाः समर्थाः तेभ्यः । कपीन सेनानाथत्वान्नाथ तव सेवैव तैः कृतेत्याह ॥ **पशूनां पतये** ॥ पशूनां कपीनां, पतय स्वामिने इति प्राग्वत् । एवमुत्तरत्रापि ज्ञेयम् । यद्वा अर्जिदृशिकम्यमिपसिवाधाभृजिपशितुग्धुग्दीर्घहकाराश्चेति । पश्यति समतयेति पशुरिति व्याख्यानात् । पशूनां सर्वत्र परमात्मदर्शिनां महात्मनां ज्ञानिनामितियावत्, पतये स्वामिने । हरिर्विष्णावहाविद्रें भेके सिंहे हये रवौ, चन्द्रे कीले प्लवंगे च यमे वाते च कीर्तित इति मेदिनी यद्वा ये वृक्षाः इव वृक्षाः ओव्रश्चू छेदने । स्नुव्रश्चिकृत्यृषिभ्यः किदिति वृक्ष इति भवति । दितिजछेदकत्वेन वा स्वछायेनातपपरिहारकत्वाद्वा वृक्षाः परार्थगृहीतावतारा वा वृक्षाः । तेभ्यो नमः । ते कीदृशा अवतारा इत्यत आह । **सेनान्य** इति । सेना इनेन स्वामिना सहिताः सेनास्तेभ्यो भिन्नाः । अनन्यस्वामिकाः । स्वयमेव सर्वोत्तमा इत्यर्थः । कुतः सर्वतः श्रैष्ट्यं तेषामित्यत आह ॥ **हरिकेशेभ्य** इति । हरिर्वायुः को ब्रह्मा तयोस्तदुपलक्षितसर्वजगत ईशाः प्रभवस्तेभ्यः वृक्षेभ्यो नमः । ज्ञानिनां निर्वाणदानं न चित्रं 'खगादयोऽप्यगुः सह त्वया पदं त्वनामय'मिति पुरुकरुणो भवानिति वदति । पशूनां पतय इति पशूनां खगमृगादीनां पतये मोक्षदानेन

1. संग्रहरामायण २-१०-४,५

पालकाय नमः । कृष्णपक्षे हिरण्यशब्देन रुक्मिणी ग्राह्या, हिरण्यरुग्म-शब्दयोः पर्यायत्वात्, ततश्च हिरण्यशब्दान्मत्वर्थे अर्शआदिभ्यो अजित्यचि च रुग्मिणीत्येव हिरण्यशब्दस्याप्यर्थः पर्यवस्यति । तेन हिरण्ये रुग्मिण्यां बाहू यस्येति स तस्मै हरिकेशेभ्यो वृक्षेभ्यः हरितवर्णपर्णरूपकेशपूर्णेभ्यो वृक्षेभ्यः तान्हेतून्कृत्वा अनेकानोकहछायेन पशूनां गवां पतये पालकाय गोपालनाम्ने नमो नम इत्यर्थो ज्ञेयः ॥ २ ॥

**नमः सस्पिंजराय त्विषीमते पथीनां पतये नमः ॥ ३ ॥**

अधुना असाधारणैः साधारणैश्च गुणैः स्तौति ॥ **नम** इति ॥ जगतां भुवनानां पतये नमः । जगत्पालकत्वं प्रतिपक्षप्रतिक्षेपं विना न संभवतीति तमाह ॥ **सस्पिंजरायेति** ॥ सस्पिं बालतृणमिव जरयति परानिति स तथा तस्मै । तृणीकृतरिपव इति यावत् । अनेनानायासेन परनिरासो ध्वनितः । सस्पिमित्यव्ययम् । शष्पेन बालतृणेन जरयति जयन्तमिति तस्मै । इराभ्रामणेन तृणाग्निना वा सायासं वा वायसशरीरं वासवसुतं जयन्तं जयत इति वा । यद्यपि खष्पशिल्पशष्पबाष्परूपपर्पतल्पा इति, शष्पं बालतृणं घासमितिच श्रूयमाणषकारो निपातितः । पठितश्च शष्पशब्दः । तथापि शंबलं संबलं चैव पांसवः पशवोऽपि च । तालव्याश्चैव दन्त्याश्चेति मतेनादिशकारस्य सकारः । द्वितीयस्य तु षत्वाभावो नुमिकारश्च वर्णागमविकारन्यायेन वा छान्दसो वा ज्ञेयाः । सस्पिं बालतृणं जरयति तत्तापक इति यावत् । सूर्यस्यायो लाभः शुभावहादृष्टं च यस्मात्तत्संबुद्धिर्वा रविवंशावतंसत्त्वान्मूलपुरुषप्रभाकृत्तोषकत्वं युक्तमिति भावः । पिंजरशब्दः पीतवर्णवद्वाचकः । सुट् छान्दस्यः । पिंजरेण सहितं हि सस्पिंजरं तेनांबरं लक्ष्यंते । पीतांबरायेति यावत् । पिञ्जरं पीतनं तालमालंच हरितालक इत्यमर इति वा । कदापि न मुधा पराक्रम इत्यप्रतिहतप्रभः प्रभुरित्याह । **त्विषीमत** इति ॥ त्विट् त्विषी सास्यास्तीति त्विषीमांस्तस्मै । त्विषीतीकारश्छान्दसः ।

यद्वा त्विषी तविषी भूमिर्बलं वा तद्वांस्तस्मै प्रभुत्वाद्भूमिमत्वं ज्ञेयम् । तवेर्णिद्वा । सौत्रोधातुः । तविषताविषावब्धौ स्वर्गेच, तविषीताविषीदेवकन्याभूमिः स्त्रियांनदीति कौमुद्युदाहृताभिधानात् । तविषस्य स्त्री त्विषी । पुंयोगादित ङीप् । स्वर्णदी तद्वते । जान्हवीजनकायेति यावत् । गूढोत्मेतिवत्तकाराकारविकृतिर्ज्ञेया, तविष्यां भूमौ जाता तविषी सा च सा ई सीता रमारूपिणी अस्यास्तीति । जातेत्युत्तरपदलोपः । ततश्च भूजाता सीता तद्वत्वं पत्नीत्वेनेति जानकीजानये ते नम इति च ॥ सन्मार्गप्रदर्शको नान्यस्त्वत्त इत्याह । **पथीनां पतयेति** ॥ सन्मार्गाणां प्रवर्तकत्वेन पतिः पालकस्तस्मै । यद्वा पथीनां पिबति नद्याद्युदकं मुखं वा स्नेहविशेषेणेति पाथिः समुद्रश्चक्षुश्च पाथिरेव पथिः बहुवचनमाद्यर्थे । ततश्च समुद्रादीनां च चक्षुरादीन्द्रियाणां वा पतये हृषीकेशायेति यावत् ॥ नदीनीरपानकर्तृत्वात्पाथिः [1]पाथोनाथः । चक्षुश्चौपचारिकपानकर्तृत्वा-त्पाथिरिति ज्ञेयम् । पिबतेस्थुकि पिबादेशाभावेच सति अत्राधिके सति पाकारलोपे पथिरिति भवति । पाथिश्चक्षुः समुद्रश्चेत्यभिधानम् । [2]पपुर्नितातं सरसाक्षिभृङ्गैर्वराननाब्जं पुरुषोत्तमस्येति श्रीमदुक्तेः ॥ ३ ॥

**नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमः ॥ ४ ॥**

विष्णुरेव भवान्नेतर इत्याह । **बभ्लुशायेति** ॥ बभ्रुरेव बभ्लुः । रेफलकारयोरभेदादेवमुक्तिः । कुर्भ्रश्चेतिकुः । बभ्रोर्विष्णोः शं सुखमयति गच्छत्यनुभवतीति तत्संबुद्धिः । तदात्मकस्यैव तदात्मकस्य कस्य सुखस्यानुभवो न कस्याप्यल्पस्येति तदनन्यतोक्ता भवति ॥ अथवा बभ्लुर्विष्णुरस्यास्तीति ल़ोमादित्वाच्छः । अत्यन्ताभिन्नांशित्वेन विशेषबलाद्विष्णुमत्वं तदात्मकस्यापि नासंभवि । बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गले इति कौमुद्युदाहृत मभिधानम् । बिडाले नकुले विष्णौ बभ्रुः

1. पाथोनाथः समुद्रः, 2. म.भा.ता.नि. ४-१३

स्यात्पिङ्गले त्रिष्वित्यमरः । कदापि परघातो न कृतो इत्यतो विरोधिविराधवधः कृत इत्याह ॥ **विव्याधिन** इति ॥ व्याधो विराधः सोऽस्यास्तीति व्याधी विराधबाध्यः स न भवतीति विव्याधी तस्मै । विराधबाधकायेति यावत् । विरुद्धो व्याधिन इति वा । अस्माभिर्मखमुखे शिखावति हुतमन्नं भवानेवात्तीति तत्तन्नाम्ना दत्तमपि त्वया भागशो दत्तमेव भुञ्जते, न तेषां स्वतः सामर्थ्यं तददन इति वाह । **अन्नानां पतय** इति ॥ अन्नानामिंद्राय स्वाहेत्याद्याहुतिरूपेण दत्तानां पतिस्तस्मै, यद्वाद्यन्ते उपजीव्यतया, अदन्त्युपजीवकान् तरतमभावेनेत्यन्नानि पारावारसुता तामरससंभव-भवमुख-मखभुजः तेषां पतये । सर्वसुपर्वाद्युपजीव्याय, यद्वान्नानि कृष्णादि भगवद्रूपाणि तेषां सकलावताराणां, षष्ठी च शेषे, संबन्धश्च तादात्म्यरूपः षष्ठ्यर्थः । ततश्चानेकावताराभिन्नः पतिस्तस्मा इति, राहोः शिरः घटस्य स्वरूपं ब्रह्मण आनन्द इत्यादिवदियं षष्ठी ॥ ४ ॥

**नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः ॥ ५ ॥**

**हरिकेशाय** हरिः वायुः को ब्रह्मा तयोरीश इति हरिकेशस्तस्मै । अनेन वायवब्राह्ममतमपहस्तितं भवति । हरिकः कपिसुखकरः सुग्रीवस्तस्य संपत्सुखदायेति वा । **उपवीतिने** यज्ञोपवीतधारिणे, अनेनास्मद्यज्ञादिसत्कर्मभङ्गेन यज्ञोपवीतधारणं मुधा भवति भवानपि यज्ञोपवीतिति चास्मद्यज्ञोपवीताभिमानवतास्मानवता तावद्भवता भाव्यमिति यज्ञोपवीताभिमानोऽस्त्विति लौकिकमाभाणकं भणितं भवति । चतुर्थी **षष्ठ्यर्थे** । यज्ञोपवीतिनां पुष्टानां सत्कर्मानुष्ठाननिष्ठानां विप्राणामिति यावत्, पतये पालकाय, विप्रत्राणकरण एव त्वदवतार इति भावः ॥ ५ ॥

**नमो भवस्य हेत्यै जगतां पतये नमः ॥ ६ ॥**

संसारी चेत् दुःखी स्यादित्यतो न कंसारिणः संसार इत्याह ॥ भवस्य हेत्या इति ॥ भवस्य संसारस्य हेत्यै हेतये आयुधरूपाय । संसारच्छेदकायेति यावत् ।

ऊति-यूति-जूति-हेति-साति-कीर्तिभ्यश्चेति क्तिनन्ततया निपातनात् कृदिकारादितीकारान्तता रात्रिः रात्रीतिवन्नभवति। तथापि इकारान्तत्वावच्छेदेन ईकारान्ततेति मतान्तरेण वा छान्दसेन वा गुणाभावेन हेत्या इति भवति। अभवस्याभद्रस्यामङ्गलस्येति यावत्। हेत्यै परिहारकायेति वा॥ भवो रुद्रे सृतौ भद्र इत्यभिधानम्। कृष्णपक्षे सस्पिः तृणीकृतः जरायः जरया तन्नाम्न्या स्त्रिया आयो लाभः शरीरसन्धानरूपो यस्य स जरायो जरासन्धो येनेति तत्संबुद्धिः। बभ्रुशाय बभ्रुर्मार्जालस्तस्य शं यस्मात्तस्मै, स्वनीतनवनीतेनाखुभुङ्मुखसुखप्रदायेति। विव्याधिने एकलव्याख्यव्याधबाधनास्पदाय। अन्नानां पतये विप्रपत्न्यर्पितप्रशस्तान्नभोक्तृत्वेन पतये। हरिणामर्जुनवाजिनां केशाः प्रसादनाय हस्ते यस्यासौ स तस्मै। उपवीतिने तदश्वरश्मिरूपोपवीतवते। आंजलैर्जलैः प्रक्षालनसमये पुरतः स्थित्वा गले रज्जुं धृत्वा क्षालयन्ति सूता इति सारथिस्वभावोक्तिः। इतरत्समम्॥ ६॥

**नमो रुद्रायाततायिने क्षेत्रणां पतये नमः॥ ७॥**

इदानीं जटादिधारणं साधारण्येन सर्वजगद्व्याप्तिः कर्तृत्वकारयितृत्वादिमाहात्म्यं वक्ति। **नमइति।** रुद्राय अरुद्राय वा नमो नमः। त्वन्नतिरुन्नतिं तनोत्येवेत्यावेदयति॥ **आततायिन** इति॥ आ सम्यक् ततो व्याप्त आततः। अवितुं रक्षयितुं शीलमस्येत्यवी, आततश्चासाववी च तस्मै। विना रक्षणं स्वभावेन न प्रयोजनोद्देशेनेति सूचयति। 'देवस्यैष स्वभावोऽयम्', 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इत्यादि श्रुतेः[1]। 'लोकवत्तुलीलाकैवल्य' मिति सूत्राच्चायमर्थः सिद्धः। एतेन[2] बाह्याभ्यन्तररिपुपराभवपूर्वकं रक्षणमुक्तं भवति॥ आततेनाकृष्टगुणकेन धनुषेति यावत्। अवितुमिति प्राग्वदिति वा। ननु तत्तत्तनुषु जीवा अवनहेतवः सन्ति तत्कथमयमेव देवो जीवातुरित्यत आह। **क्षेत्राणां पतय** इति॥ क्षेत्राणां तत्तच्छरीराणां पतये स्वामिने। अनेन

1. तैत्तरीयोपनिषत्, 2. सूत्र २-१-३४

जीवानामस्वातन्त्र्यमुक्तं ज्ञेयम् । 'नर्ते त्वत्क्रियते किंचने'ति श्रुतेः । शरीरेषु **स्थित्वा सर्वं वेत्तीति वा क्षेत्राणां पतिः** । 'क्षेत्रज्ञं चापि मां विद्धी'ति[1] भगवदुक्तेः । क्षेत्रं पत्नी शरीरयोरित्यमरः । क्षेत्राणि पुण्यभूमयस्तेषां पतये अत्यन्तपावित्र्यसंपादकायेति वा ॥ ७ ॥

**नमः सूतायाहंत्याय वनानां पतये नमः ॥ ८ ॥ नमो रोहिताय स्थपतये वृक्षाणां पतये नमः ॥ ९ ॥ नमो मंत्रिणे वाणिजाय कक्षाणां पतये नमः ॥ १० ॥ नमो भुवंतये वारिवस्कृतायौषधीनां पतये नमः ॥ ११ ॥**

अष्टमेनापि व्याप्तिमेवाह । **नमः सूतायेति** ॥ सुष्टुतः सूतस्तस्मै सुना गगनादिततनावदन्यनिघ्नतां निवारयति ॥ यद्वास्मदादिमनोरथरथसारथये । सूतस्त्वष्टरि सारथावित्यमरः । कृष्णपक्षे स्पष्टोऽर्थः । प्रतिवीराप्रतिहत इत्याह । **अहंत्यायेति** । हन्त्यो घात्यो न भवतीत्यहंत्यः । हन्तेः कुत्वेन घाभावो दीर्घाभावश्च छान्दसौ । साकल्येनाप्राप्यायेति वा । हन हिंसागत्योः । **वनानां** तत्तद्योग्यताविभागानुसारेण तत्तत्प्राप्यभाग्यानां **पतये** प्रापकाय । वणषण संभक्तौ । आहन्त्य, आहत्य, हत्वा, यवनानां, सुयुरुवृञोयुजिति युच्यनादेश यवनेति ज्ञेयम् । म्लेंछवन्म्लेंछाः दुराचारा राक्षसा इति यावत् । यवनान् प्रधानान् प्रधने निधनं प्रापय्य जीवतां विभीषणादीनां सतां यवनानां पतये वा, कृष्णरामयोस्तादात्म्याद्व्येयमुक्तिः । कालयवनादियवनान् । इतरत्सममृ । अत एव तद्धननसमयायातकोपवशाद्रक्तवर्णवानित्याह ॥ **रोहितायेति** ॥ रक्तवर्णाय । रोहितं लोहितं वा मृगमयत्यनुगच्छति तत्संबुद्धिर्वा । रुहेरश्च लो वा । रोहितो मत्स्यमृगयोरित्यभिधानम् । मत्स्याकृतिमते वा । नयज्ञ न यज्ञादिकृतो वयमपि तु त्वमेवेत्याह ।**स्थपतय इति** । गीष्पतिनामकमखकर्ता त्वमेवेति स्थपतिः तस्मै कर्तृत्वं कारयितृत्वं च सदृष्टांतेन तवेति वा स्पष्टयति ॥ स्थपतय इति ॥ स्थपतिरिव स्थपतिः तक्षा

1. भ.गीता. १३-२

तस्मै, करोति कारयति चेति स्थापतिः । स गीष्पतीष्ट्या स्थपतिः, स्थपतिः कारुभेदेऽपीत्युभयतश्चामरः । यथा कारुः इतरान् कारून् अपि नियुङ्क्ते, एवं कुरुते इति करोति च तथेश्वरः करोति कारयति चेति स्थपतिः ॥ अमुमेवार्थं यथा तक्षोभयथेति सूचयामास सूत्रकृत्, कक्षानामनेकवनसंबन्धिनां नौका-रूपाणां वृक्षाणां पतये । तृतीयार्थे चतुर्थी । पत्या, दशरथस्थापितदाशेशेन गुहेन सहमन्त्रिणे गुप्तभाषण कृते । वणिजो वैश्याः प्रजाः तेषामयं वाणिजः तत्स्वामीति यावत् । तस्मै क्षत्रियायेति तात्पर्यम् । क्षत्रजातेरेव वणिगव्य-वधानेनोत्तमत्त्वादियमुक्तिः । पणेरिज्यादेश्चवः (उ.सू. २२८) नैगमो वणिजो वणिक् इत्यमरः । अथवा कक्षाणां वनांतर्वर्तिनां वृक्षाणां पतये शुभ-वन-भवनवत्त्वाद्रक्षणं युक्तमिति । मंत्रिणे । अस्त्रोत्सर्जनोपसंहार-हेतुमन्त्रवते वा भुवमिति । **द्वितीया सप्तम्यर्थे** अलुक् च भुविति । आनंदात्मक इति भुवन्तिस्तस्मै । आनन्दन्तीति वै वदेत् । अथवा भुत्रम् उपलक्षणया मोक्षं च तनोतीति तस्मै वा । अथवा भवन्तिरेव भुवन्तिस्तस्मै सर्वदैकप्रकारेण वर्तमानाय, भुवो झिच्चेति झिच् अन्तादेशे भवन्तिरिति भवति। वर्तमानकालवाच्ययं यद्यपि तथापि वर्तमानत्वसाम्येनात्रापि संभवतीति ज्ञेयम् । वरिवा श्रीः कृतं सुकृतं वरिवसा सहकृतं सुकृतं यस्येति वरिवस्कृतस्तस्मै । अथवा वरिवा वरिवस्या पूजेति यावत् कृतं यैरर्चकैस्तै-रनुप्राप्यो वा । अर्चकप्राप्य ते नमो नमः । औषधीनां हनुमदानीत-गन्धमादनगतौषधीनां मृतसञ्जीवन्यादीनां पतये । तद्गतमृतोज्जीवकत्वशक्तिः त्वदायत्तेति तात्पर्यम् । स्पष्टः कार्ष्णोऽर्थः ॥ ८,९,१०,११ ॥

**नम उच्चैर्घोषायाक्रंदयते पत्तीनां पतये नमः ॥ १२ ॥ नमः कृत्स्नवीताय धावते सत्त्वनां पतये नमः ॥ १३ ॥**

कथमधुना अधुनातनतनुतनुनाऽमुना यमुनाग्रजनि-सदननिवासासादनं बहुलबलपलाशाकुलस्य स्यादितिमतिमन्दाशङ्काशङ्कुं यद्घोष एव दोषाचर-

निरासकरः **किममोघशक्ते** राघवस्येति **कैमुत्येनोन्मूलयति नम** उच्चैरिति । **उच्चैरुर्ध्वं ख** इति यावत् । उदिचेर्डैसिः स्वरादिपाठादव्ययता । पत्तयः **पादचारिणस्त इव पत्तयो यथा भूमौ चरंति चरणैर्मानवास्तथोर्ध्वं चरन्तीति खचराणां** रक्षसामिति यावत् । पतये चतुर्थी द्वितीयार्थे । पतिं रावणम् **आक्रन्दयित्रे युद्धाय सन्नद्धो** भव भवानित्याह्वयित्रे रोदयित्रे वा । **क्रदि आव्हाने रोदनेच** । ते घोषाय ध्वनये नमः । कृष्णपक्षे उच्चैर्ध्वननू घोषः । **पादभूषणं यस्य तस्मै** । अत **एवाक्रन्दयते शब्दयित्रे** पत्तीनां सेनानां पतये नायकाय । **स्वोत्तमं** समस्तसाहित्येन नमति ।। **कृत्स्नवीतायेति** । कृत्स्नेन **समस्तेन** वीतः परिवृतस्तस्मै सभार्याय सांगाय सवाहनाय सायुधाय नमो नमः । धावते वने इतस्ततः संचरते यद्वा कृत्स्ने समग्रजगति विना गरुडेनेतो वीतस्तस्मै धावते । वीतः सन्नेव धावतीति धावनक्रियायामर्थाद्गरुडसाहित्येन गरुडारूढायेत्यर्थः पर्यवसन्नः । कृत्स्नेन समस्तराजचिन्हेन वीतो रहितो विरक्तस्तस्मै वा । धावु गतिशुध्योः । कृत्स्नं यत्कपिसैन्यं तदर्थं विना गरुडेनेतस्तस्मै वा । कृत्यशूभ्यांक्स्नः इति क्स्ने कृत्स्नमिति भवति । वार्तेर्डिच्चेति, डिति विरितिभवति । **उच्चैर्घोषाय** आभीरपल्लीनिवासिने । उच्चैः क्रन्दयते वेणुं रणयते सत्वनां भक्तानां पतये स्वामिन इति रामपक्षे, सत्वनां सात्वतां यादवानां पतय इति इतरत्र इतरत्समम् ।। २ ।।

**(इन्द्र जटाकलापिनां पतये नमो नमो वृषाललतायिनां पतये नमो नमो ललाटवृकायिनां पतये नमो नमो ललालतायिनां पतये नमो नमो नना-ननतायिनां पतये नमो नमो वनाननतायिनां पतये नमः इति खिलम् ।।)**

एतदुत्तरं खिलवाक्यम् । तथाहि । जगत्तादात्म्यमतं अपाकरोति । इन्द्रेति श्रेष्ठ । परमैश्वर्यसंपन्न वा । अनेन हरिः न जगदात्मा ईश्वरत्वात् व्यतिरेकेण देवदत्तवत् इति । 'परो मात्रया' । 'न ते विष्णो' इत्यादि श्रुतिमूलमनुमानं मानमुक्तं भवति । अधुना बुधाबुधसाधारणलक्षणेन रामपरतैवोचितेति

स्पष्टमाचष्टे ।। **जटाकलापिनां पतय** इति ।। जटैककलापोऽलंकारो येषामस्ति ते तथा तेषां मुनीश्वराणां पतये । कलापो भूषणे बर्हे संघे चापीति चाभिधानं, जनेष्ठन् लोपश्चेति ठन्नंतलोपश्च, जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटीति मेदिनी, जटानां कलापः समूहो येषु ते जटाकलापिनस्तेषां वा, व्रतिनस्तु जटासटेत्यमरः । "वटक्षीरं जटाः कर्तुमुपानिन्ये गुहो बहु । लक्ष्मणस्यात्मनश्चाथ जटाश्चक्रे जगद्गुरुरिति रामायणे"[1] । अनेन विरक्ततोक्ता, विरक्तोऽपि भक्तवत्सल इत्याह ।। **वृषाललतायिनां पतय** इति । वृषेन्द्रस्तस्यालाति सम्यग्ददाति फलमिति वृषाला सा च सा लता कल्पवल्ली तयाचायो लाभो येषामस्ति ते वृषाललतायिनो नाकौकसः । तेषां पतये । वासवो वृत्रहा वृषा, वल्लीस्याद्व्रततिर्लतेति चामरः । (**निलिंपपालिपालकाय नमो नम** इति) । यद्वा वृषं सुकृतमालान्ति संपादयन्तीति वृषलाः सुराः तेषां लता तयायो येषां मुनीनां तेषां पतये । मूषके सुकृते श्रेष्ठ वृषभोऽपि वृष इत्यमरः । पार्वतीपतिस्वामी राम एवेत्याह । **ललाटवृकायिनां पतय** इति ।। ललाटे अलिके । ललाटश्च लोचन इति यावत् । वृकस्याग्नेरायो येषु ते रुद्रा इति यावत् । तेषां पतये । ललाटलोचनाग्निप्रापकाद्दष्टवतां वा । शकादिभ्योऽटनिति ललधातोरटनि ललाटेति भवति । वृकोऽग्नावसुरेऽपि चेत्यभिधानम् । वृकमग्निमयन्तीति वा तेषाम् आनन्दाद्यात्मककायवन्तः सन्मुक्ताः दुःखसुखोभयात्मकशरीरा मध्यममुक्ताः । दुःखादिरूपशरीरिणोऽसन्मुक्ता एवं त्रयाणामपि लिङ्गाङ्गभङ्ग प्रापणपूर्वकं तद्रूपाभिव्यञ्जको नान्यस्त्वत्तः शक्त इति वक्ति । **ललाललतायिनां पतय** इति । ललन्ति नित्यं विलसन्ति रमन्त इति ललाः । लड्विलासे, लडयोर्ललयोश्चैकत्व-स्मरणाल्ललतीति स्वाम्यादय इत्युक्तेर्ललतीति विलासो ज्ञेयः । न ललन्तीत्य-ललाः । अविभागेन ललाललाश्च तेषां भावः । ललत्वं सविलासता । अललत्वं दुःखित्वं ललाललत्वं उभयरूपत्वं तमाययंति प्रापयंतीति त्वदाज्ञया

1. वा.रामायणे २-५२-६८,६९

स्वेतरजनानां । श्रीविधिवायवः तेषां पतये । 'वायुना हि सर्वे लोका नेनीयन्ते', 'स एनान्ब्रह्म गमयतीति,' 'वायुना वै गौतम सूत्रेणे'त्यादि-श्रुतेः । ''प्रविश्यादौ विधिं सर्वे श्रियं विष्णुं विशन्ति चैति'' वचनात् । [1]'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञये'त्यादेः । केचित्तु लिङ्गभंगो न मध्यमानामित्याहुः । श्रीमद्वादिराजगुरुराजा अस्मद्गुरुराजाश्चास्तीत्याहुः । नच त्रिदिवनिरयभूगोचरान्नित्यबद्धानिति वचनविरोधः । तस्याप्यर्थस्तत्रैव पूर्वोत्तरविरोधपरिहारायेत्यमेवाङ्गीकार्यः । तथाहि पूर्वं 'योग्यता तारतम्यादि'-त्युक्तिः । उत्तरत्र 'नित्यबद्धानि'ति । तेन ज्ञायते सुखदुःखोभयरूपरूपत्व-मेवार्थ इति । अत एव सुधायां मध्यमाः सुखदुःखात्मकफला इति । अत्रापि 'तत्वज्ञानिति' नित्यमुक्तिग्रहः 'तामिस्रांधाधिकाख्य' इति नित्यमुक्तिग्रहः । अतो मध्यस्थयापि नित्यमुक्त्या भवितव्यम् । अन्यथा क्रमविरोधापत्तेः । त्रिदिव-भूपदेन सुखात्मकता निरयपदेन दुःखात्मकता चेत्युभयरूपत्वं ज्ञेयम्। 'योग्यता तारतम्यादि'ति च ज्ञापयत्येतमेवार्थम् । [2]'स्वभावाख्या योग्यता या हठाख्ये'त्यक्तेः । 'जक्षन्क्रीडन् रममाणः स्त्रीभिर्वायानैर्वेति' विलास-श्रुतेः 'क्षुत्क्षामानिति' 'मानुषमिश्रमतयो विमिश्रगतयोऽपि' चेत्यादि स्मृते-रयमर्थः सिद्धः इति प्रसङ्गादुक्तः । 'येप्यन्य देवताभक्ता' इत्युक्ते-रितरपरिचारकानामपि फलदाता भवानित्याह ॥ **अननाननतायिनां पतय** इति। अने मुख्यप्राणे नता अननता। अननेन तत्कारितया चेष्टया निमित्तेनेत्यननाननताः । ते च तेऽयिनो ज्ञानवन्तः । अय गतौ । ये गत्यर्थास्ते ज्ञानार्थाः । एतादृशोऽपी-दार्नी वानप्रस्थ्यादिदर्शनसुलभोऽ-सीत्याह। **वनाननतायिनां पतय** इति । आननस्य भाव आननता । आननता मुख्यत्वं प्राधान्यमिति यावत् । वनेष्वाननता येषां तानि वनाननतानि । वनेषु प्राधान्यवंति वनोत्तमानि । उत्तमवनानि इति यावत् । तेष्वयो गतिः स्थितिर्येषां येष्विति वा ते वनाननतायिनस्तेषां वानप्रस्थानां शरभंगादीनां

1. म.भा.ता.नि. १-७८, 2. म.भा.ता.नि. २२-८४

पालकाय । अथवा वनानामाननतां प्राधान्यं यापयंति तच्छीला वा तथा तेषां । यद्वा अवनाननतायिनामिति छेदः । अवने रक्षणे आननता प्रधानता यस्य सोऽवनाननतोऽनंतो भगवान्, तमाययन्ति ज्ञापयन्ति चोपदेशादिनेति ते तथा । उपदेशका इति यावत् । सर्वदा भगवदुपदेशेन रतानामस्मदादीनां पतये अनेन मत्तो यस्ते बलाबलादिमन्त्रोपदेशः स तवमय्यणनीयो घृणाकरणको लोकानुकरणकरणको वा नाज्ञानादिनिदानक इति ध्वनयति ।। यद्यपीदं यजुःखिलमखिलार्थसङ्ग्राहकमिति (पूर्वमेव)व्याख्यातं वेदितव्यम् ।।)

**इति श्रीमन्नवरत्नपुमुत्तमकृतायां शतरुद्रिययथार्थप्रकाशिन्यां श्रीमन्मध्व-समयप्रदर्शितमार्गानुवर्तिन्यां ललितपदमञ्जर्यां यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ।। १ ।।**

**।। श्रीमन्मध्वांतर्गत वेदव्यासात्मक श्री लक्ष्मीहयग्रीवार्पणमस्तु ।।**

॥ श्री लक्ष्मीनारायणाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुराजो विजयते ॥ श्री गुरुभ्योनमः ॥

**नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः ॥ १ ॥ नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः ॥ २ ॥ नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः ॥ ३ ॥ नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः ॥ ४ ॥ नमो निषेरवे परिचरायाण्यानां पतये नमः ॥ ५ ॥ नमः सृकाविभ्योऽजिघांसद्भ्यो मुष्णतां पतये नमः ॥ ६ ॥ नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृतानां पतये नमः ॥ ७ ॥ नम उष्णीषिणे गिरिचराय कुलुंचानां पतये नमः ॥ ८ ॥ नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमः ॥ ९ ॥ नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः ॥ १० ॥ नम आयच्छभ्यो विसृद्भ्यश्च वो नमः ॥ ११ ॥ नमोऽस्यद्भ्यो विध्यद्भ्यश्चवो नमः ॥१२॥ नम आसीनेभ्यः शयानेभ्यश्च वो नमः ॥ १३ ॥ नमः स्वपद्भ्यो जग्रद्भ्यश्च वो नमः ॥ १४ ॥ नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः ॥ १५ ॥ नमः सभाभ्यः सभापतिभ्यश्च वो नमः ॥ १६ ॥ नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ॥ १७ ॥**

अनुवाकेषु यजुरधिकन्यूनतं खिलाखिलभेदेन वर्तते । तथापि प्राचीनटीकातो विविच्य ज्ञेयं । तथाहि परः । तेषु चानुवाकेषु सर्वाण्यपि यजूंषि । तानि च द्विविधानि । उभयतो नमस्काराणि अन्यतरनमस्काराणि च । त्रिष्वनुवाकेषु नमस्कारादिकं नमस्कारान्तमेकैकं यजुः । इतरेषु पञ्चस्वनुवाकेषु नमस्कारादि-कमेवैकैकं यजुरिति वाष्टानुवाकाः एवमुत्तरत्रापि ज्ञेयम् ।

**नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः ॥ १ ॥**

न मुधा मधुसूदनस्य जटादिधारणं किन्तु शीतातपवातसहनमपि लौकिकीरीतिमनुकरोतीश्वर इति तृतीयानुवाकादिमयजुषाह । **नम इति ॥**

शीतातपादिसहनवते । षह मर्षणे अनुदात्तेत् । ततश्चानचि मुकि च रूपम् । अस्यान्यो नियामकोऽस्ति चेत्तदाज्ञाया अनुल्लङ्घ्यत्वात् शीताद्युपद्रवैः धैर्येण स्थगनं सम्भवेदन्यथानर्थप्राप्तेरित्यतो भवानेव निरवधिकोऽधिक इति वक्ति ॥ **निव्याधिन** इति ॥ आदधाति यः स आधः । पोषक आश्रयो वा । ददातिदधात्योर्विभाषेति शाभावपक्षे णः । येषां सोऽस्ति ते आधिनः । आधिभिर्विरुद्धो व्याधी नितरां व्याधी निव्याधी तस्मै । स्वाश्रय एव भगवान्नान्याश्रय इति भावः । 'स्वे महिम्नी'ति श्रुतेः । व्याध्यधिदैव-तदुर्गाकालरात्र्यादिरमारूपाणामधिपतौ कथं स्यात् व्याधिबाधेत्याह । **आव्याधिनीनां पतय** इति ॥ आसम्यक् व्याधिं मृत्युमिति यावत् । नयन्ति प्रापयन्ति लोकानामित्याव्याधिन्यो या या दुर्गादिरमारूपाणि तासां पतये । त्वमेव बहुमनुषे न मानुषाः परे इत्यत आह । **सहमानायेति** ॥ मानेन बहुमानेन स्तवननमनादिना सह वर्तत इति तस्मै । कर्तृविशेषानुपादाना-द्बहुमानवकृतबहुमानवहता सूचिता । यद्वा स्वाश्रयत्वं नाप्रामाणिकं रामस्येत्याह । **सहमानायेति** ॥ मानैः प्रमाणैः श्रुतिस्मृत्यादिमानैः सह वर्तत इति सहमानः तस्मै एतेन निर्विशेषत्वादिवाचामप्रामाणिकत्वं सूचितं भवति ॥ गुणा मिथ्याभूता एव भवंति न वास्तवा इत्यतो वाह ॥ **सहमानायेति** ॥ मानेन ज्ञानेन सह वर्तत इति स तथा तस्मै । सहशब्देन नित्यावियोगिता ज्ञानस्योक्ता भवति ॥ मानं ज्ञानमिति वचनात् । अथवा आ सम्यग् अव्या रक्ष्या आव्यास्तेषां य आधिर्मानसीव्यथा तं नयन्त्यपन-यन्तीत्याव्याधिनियः पद्मा-पद्मभव-भवादयस्तेषां पतये । रक्षणीय-जनार्तिछेत्रे । पुंस्याधिर्मानसी व्यथा । आधिर्मनोवरूथं च ह्यात्मा स्वमिति चोच्यते इत्यमराभिधानात् । आव्यानामधिमधिकं नयन्ति प्रापयन्तीति ते तथा तेषां पतये वा । सहमः सम्पत्सहितोऽनो मुख्यप्राणो यस्येति वा । मखविखण्डनमन्युना शतमन्युनाज्ञप्तपयोवहमुक्तमहासारसहनशीलायेत्यपरत्र ज्ञेयम् । इतरदविषमम् ॥ १ ॥

**नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः ॥ २ ॥**

यत्त्वं सदोभयचोरसंहारकस्तेन स्तेनरावणहननं न दुःशकमिति द्वितीयेनाह ॥ **नमइति ॥ ककुभाय** ते नमः । ककोःककुदः भेव भा यस्य तस्मै । कुकुच्छब्दो वृषभस्कन्धोपरितनभागवाची ततश्च तद्वत्प्रधानभूतस्तस्मै । शश्वदेकप्रकारकान्तये वा । ककुदस्यावस्थायां लोप इत्यकारलोपे ककुदिति । ततश्च ककुद्भेति । तथाप्यलोपे पृषोदरादित्वात्तलोपोऽपि ज्ञेयः । यद्वा दुःखस्पृष्टस्रष्ट्रादिश्रैष्ठ्यमाह । ककुभायेति ॥ कौ ब्रह्मवायू तयोरपि कु कुत्सिता भा येन तस्मै । [1]'अज्ञानं च चतुर्वारं द्विवारं भयमेव च, समुद्र स भाणमकरोदि'त्यादिवचनात् । यद्वा के जले समुद्रमध्य इति विद्यमाना कुर्भूमिस्तत्र भा यस्य तस्मै । समुद्रमध्यगतसमुद्रमेखलगतोदवसितभासमानाय। यद्वा कस्य ब्रध्नस्य सूर्यस्य कौ भूमौ भा यस्मात्तस्मै । [2]'यदादित्यगतं तेजः, तत्तेजो विद्धिमाम'कमित्यादेः । एतेन प्राकाश्या ह्येते तस्करा इति रावणादि प्रकाशैकागारिकनिरासस्यानायाससाध्यता प्रकटिता । मारुते वेधसि ब्रध्ने पुंसि कःकं शिरोऽबुनोरिप्युभयत्रचामरः । 'अन्तः समुद्रे मनसा चरन्त'मिति श्रुतेः । [3]'अन्तस्तद्धर्मोपदेशादि'ति सूत्राच्चायं अर्थः सिद्धः । स्तेनानां स्तेनान् रावणादीन् हन्तुमिति शेषः ॥ २ ॥

**नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः ॥ ३ ॥**

**निषङ्गिणे** खड्गधारिणे । **निषङ्गिणे** बाणधारिणे । **इषुधिमते** तूर्णीरधारिणे धनुर्धराय वा, अत एव पतये सर्वस्वामिने अथवा अस्तेनाः ब्रह्मस्तेनाः । आत्मनो ब्रह्मतादात्म्यज्ञानमेव ब्रह्मचौर्यमिति ते अस्तेनाः । तान्प्रति निषङ्गादिधारिणे । 'ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः' ॥ 'ये के चात्महनो जनाः' । [4]ईश्वरोऽहमहं भोगीत्यारभ्य क्षिपाम्यजस्र-

---

1. भा.तात्पर्य ६-९-२४, 2. भ.गीता १५-१२, 3. ब्रह्मसूत्र १-१-२०, 4. भ.गीता १६-१४,२०

मशुभाना-सुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौंतेय ततो यान्त्यधमाङ्गति'मित्यादि श्रुतिभगवद्वचनसिद्धोऽय-मर्थः । अत एव **तस्कराणां** वाङ्मनसशरीरतोऽनितरपरिचारकाणां एकान्त-भक्ताना-मितियावत् । यद्वा तस्करा इवतस्कराः स्मरणदर्शनचरण-परिचरणादिना तदज्ञाता एव नैकजन्मार्जितपापपरिहारका इति तस्कराः सन्तः तेषां **पतये** प्रसिद्धचोराय नमोनमः ।। अनेकजन्मार्जितपापहरणाच्चोर-पतितौपचारिकी ज्ञेया । अत एव भारते । 'नारायणो नाम नरो नराणां प्रसिद्धचोरः प्रथितः पृथिव्याम् । अनेकजन्मार्जितपापसंचयं हरत्यशेषं स्मृतिमात्र एवे'ति ।। ३ ।।

**नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः ।। ४ ।।**

चतुर्थेन [1]'निकृत्या निकृतिं हन्या'दितिमानाद्रक्षआदिशिक्षके न दोषगन्धी भवानिति वदति । **नम** इति ।। **वञ्चते** वक्रबुद्धिं कुर्वतेऽयोग्यवर्गाय **परिवञ्चते** वञ्चयते, परिणा अरीणामनुत्थानतमःपातनरूपत्वं वञ्चनस्य द्योतयति, अत एव **स्तायूनां** स्वभजकजनशरीरान्तःसतां सत्कर्माचरणमतिमपहरतां चोराणां चोरान् परिवञ्चत इत्यावृत्तिः । निर्यकारस्तैधातुरिति माधवादय इति तत्वबोधनी ।। ततः स्तैशब्दः, इत्यस्मादात्वे युकि उप्रत्यये च स्तायुरिति ज्ञेयं तान्वंचयित्वा स्वांचन मुदमुदंचयते ते **नम** इति तात्पर्यम् । यद्वा स् शं तन्वंतीति स्ताः आ सम्यक् युवानो नित्यं युवानः । निर्जरस इति यावत् । स्ताश्च त आयुवानश्च तेषां पतये देवस्वामिन इति यावत् । पूर्वोक्तरीत्या शस्य सकारः अकारलोपश्च ज्ञेयः । आयुर्वाच्ययं आयुशब्दः अस्तं नाशशिरस्कं आयुः येषां तेऽस्तायवः (नाशसंदेहो नास्तीति निश्चित्य आस्ते इत्युक्तम् ।) तेषां परिवंचते वंचयतो भक्तवर्गस्य पतये पालकाय ।। ४ ।।

**नमो निचेरवे परिचरायारण्यानां पतये नमः ।। ५ ।।**

1. म.भा.ता.नि. २८-२२०

'**सर्वज्ञत्वमिव सर्वात्तृतामिवारश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके । अरश्च ह वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वावि**'ति श्रुतिस्मृति बोधितामृतां-भोनिधियुगलीभासमानासमानाकुण्ठसुखवैकुण्ठनिलयसकलपालकत्वरूपमहा-माहात्म्यं पञ्चमेन यजुषा प्रपञ्चयति ॥ **नमो निचेरव** इति नितरां चरति गच्छत्यवगच्छतीति निचेरुस्तस्मै । प्रलये सकलकवलनाद्वा चेरुस्तस्मै व्याप्ताय वा । चर गतिभक्षणयोः । ज्ञानिज्ञानविषयतामाह । **परिचरायेति** । परो हरिः परलोको वा येषां ते परिणस्तैश्चर्यते ज्ञायत इति परिचरस्तस्मै परमास्तिकलोकविज्ञेयायेत्यर्थः । इदानीं लोकमोहनाय स्वीकृतावस्थामाह । **परिचरायेति** ॥ परिचरति शुचिं शुचीनस्मदादींश्चेति परिचरस्तस्मै वा । अरस्नन्नामकश्च ण्यस्तदाव्हयश्चेत्यरण्यौ तौ सुधासिन्धू तत्र भवा आरण्या-स्तेषाम् । पीयूषपाथोनाथमध्याध्यासीनजनावनाय नमो नमः । यद्यप्यरण्या-न्मनुष्य इति वुजि युवोरनाकावित्यकि चारण्यका इति भवितव्यम्। तथाप्य-रण्याण्ण इति णप्रत्ययमङ्गीकृत्य पदार्था इत्यध्याहृत्य चामनुष्यत्वसंपादित आरण्या इति भवति । अथवा मुक्तानाममनुष्यत्वेन णो वा । संबन्धसामान्ये णि वा अरण्या इति भवतीति ज्ञेयम् ॥ ५ ॥

**नमः सृकाविभ्योजिघाꣳ सद्भ्यो मुष्णतां पतये नमः ॥ ६ ॥**

सृवृभूशुधिमुषिभ्यः ककिति सृधातोः ककि सृक इति भवति । सृक उत्पलवातयोरित्यभिधानम् । सृकानितरानवरान्वायूनवन्तीतिसृकाविनो मुख्या असवस्तदात्मकत्वाद्धनुमर्द्धीममध्वाश्च तेषाम् । चतुर्थी षष्ठ्यर्थे । **मुष्णतां** सीताद्रुपदजावेदविद्याद्यपहारं कुर्वतः । कर्मणि षष्ठी । रावणसुयोधनसंकरादि-कान् **जिघांसद्भ्यः** हन्तुमिच्छद्भ्यः ॥ हन्तुं समर्थानामिति यावत् । पतये रामबादरायणवासुदेवादिरूपिणे नमः । न चोरमारकादिदोषकलुषितजनावन-कृदुपास्यम् वस्तु । वस्तुतस्तु स्तुत्यगुणगणयुक्तमेव वक्तुम् युक्तम् । लोके यः कोऽप्येकस्य कस्यचित्तस्करस्य स्वायशस्करस्याश्रयभूतो भूतले वन्द्योऽपि

निन्द्यो भवतीति सार्वजनीनम् । तस्कराद्यात्मकत्वेन हरोपा सामर्थकरीमुदाहरन्कथमनर्थं न प्राप्नुयादित्यलम् ॥ कृष्णपक्षे चौर्यादिकं विश्वजनीनमिति सुनेयोऽन्वयः ॥ ६ ॥

**नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृंतानां पतये नमः ॥ ७ ॥**

दशकण्ठोपकण्ठ उत्कण्ठावशात्प्रदर्शनीयानि दर्शनीयानि रूपाण्यनेकाकाराणि नानायुधधराणि रघुनायकस्यालघुश्लाघामोघज्ञानः स्वमनसा संचित्य यथा स्वयोग्यं तमपरोक्षीकृतसुकृतफलरूपरूपः सप्तमं यजुरारभ्याश्वपतिभ्यश्च वो नम इत्यन्तेन यजुषा तानि नमति ॥ **नमोऽसिमद्भ्य** इत्यादिना ॥ असिरस्ति येषामित्यासिमन्तः तेभ्यः । धन्वाविभ्यः । धन्व धनुरविः पर्वतश्च हस्ते येषान्ते तेभ्यः । अवयः शैलमेषार्का इत्यमरः । नक्तं च रात्रौ चरन्तीति नक्तंचरन्तः । चरतेः क्विप् । तेभ्यः । ल्यब्लोपनिमित्तेयं पञ्चमी राक्षसान्निमितीकृत्य, प्रकृन्तानां पतये । प्रकर्षेण कृन्तंति छिन्दन्तीति प्रकृन्ताः रदननखमुखमुखावयवै रक्षोवक्षोदशनवसनसुखविखण्डनपण्डिताः कपयस्तेषां पतये । प्रपूर्वात् कृती छेदन इत्यतो नुमि प्रकृंता इति भवति । ननु चेदितो नुम् धातोरिति तपकरणादस्येदित्वाभावान्नुम् दुर्लभ इति चेत्, सत्यं । इदितो नुम् धातोरिति योगविभागेनेदितस्तदितरस्मादपि धातोर्नुम् भवतीति व्याख्यानेन नुम् भवति । अतएव महाभाष्ये । इदितोनुम् ततो धातोरितीति । अनेन 'नचैक नखनिकृन्तनेन विकारः सर्वं कार्ष्णायसम्' । [1]'स्वान्तध्वान्तनिकृन्तने जितमहावैकर्तनांशुव्रज'मित्यादि प्रयोगाः सुयोगा ज्ञेयाः । अतएव जयदेवोपि । [2]'विरहनिकृन्तनकुन्तमुखाकृतिकेतकदंतुरिताश' इति ॥ ७ ॥

**नम उष्णीषिणे गिरिचराय कुलुंचानां पतये नमः ॥ ८ ॥**

---

1. [illegible]प्रकाशिका [illegible], 2. गीतगोविंदम्

**अत एवोष्णीषिणे** । उष्णमुष्णत्वम् येषामस्तीत्युष्णिनः । तापकाः परोपद्रवकरा राक्षसास्तानीषयितुं शीलमस्यास्तीत्युष्णीषी तस्मै । स हिंसक हिंसाशीलाय । ईष गतिर्हिंसादर्शनेषु । उष्णीषिणे ते नमोनमः । गिरौ चित्रकूटादिके चरतीति गिरचरस्तस्मै । गिरिणादभीष्टप्रापणात् गिरी स च चरो गतिर्ज्ञानं वा यस्मात्तस्मै । कुंभूमिम् उपलक्षणया द्यांच लुंचंत्यपहरन्ति बलावलेपादात्मसात्कुर्वतीति कुलुंचाः प्रबलबलिबलभिञ्चिदादयस्तेषां पतये । शिक्षकत्वेन स्वामिने । सेनापतिरिरितिवत्पतिशब्दः शिक्षकपरो ज्ञेयः । य उष्णीषी यश्च कुलंचानां पतिः योऽपि गिरिचरः इति वो नमो नम इति सामस्त्येन नम उक्तिः । यद्वा कानिचिदसिमन्ति इतराणि नक्तंचरन्ति । अन्यच्चोष्णीषि उष्णीषधारि किरीटवत् शिरोवेष्टनवद्वा । उष्णीषः शिरोवेष्टकिरीटयोरित्यमरः ॥ ८ ॥

**नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमः ॥ ९ ॥**

अपराणि धन्वावीनि, इषुमंति च पराणि । एतादृशेभ्यः वः युष्मभ्यं नमो नम इति वान्वयः । ये व इव वस्तेभ्यो नम इति वा । उरिति ह्रस्वोवर्णेनाणुरूपम् । ऊ इति दीर्घेण दीर्घरूपम्, ऊ३ इति प्लुतेनोवर्णेन त्रिविक्रमाद्यतिव्याप्तं रूपं ग्राह्यम् । ततश्च उश्चऊश्चऊ३श्चवः वइव इत्यनेनाणुमहत् महीयोरूपं च ग्राह्यमिति ज्ञेयम् ॥ अनेन ''नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यः । अणोरणीयान्महतोमहीयानिति समाख्योक्ता भवति ।'' महान्तिचाणूनि च चिन्तयामीत्यादिस्मृतेः ॥ ९ ॥

**(नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः ॥ १० ॥ नम आयच्छभ्यो विसृभ्यश्च वो नमः ॥ ११ ॥ नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमः ॥ १२ ॥ नम आसीनेभ्यः शयानेभ्यश्च वो नमः ॥ १३ ॥ नमः स्वपद्भ्यो जग्रद्भ्यश्च वो नमः ॥ १४ ॥ नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः ॥ १५ ॥ नमः सभाभ्यः सभापतिभ्यश्च वो नमः ॥ १६ ॥ नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ॥ १७ ॥ ॥ ३ ॥)**

दाशरथिरूपानुपममहत्वं दशमेनाप्याह। **आतन्वानेभ्य** इति ॥ विधूननेन धनुर्गुणमनणीय संकुर्वद्भ्यः । **प्रतिदधानेभ्यः** कार्मुककौटौ पिपाटसन्धानं कुर्वद्भ्यः वो नमो नमः ॥ १० ॥

**आयच्छद्भ्यः** परेभ्यः पात्रेभ्यः देयपदार्थानाशुगान् ददद्भ्यः दातृभ्यो वा । **विसृजद्भ्यः** बाणांश्च मुंचद्भ्यः वो नमः ॥ ११ ॥

**अस्यद्भ्यः** वाचा नीच-चोर-अनाचारेति रावणतिरस्कुर्वद्भ्यः । न पक्षिपक्ष्मलक्षणलक्ष्यच्युतिः कचिदप्यच्युतेन क्षिप्तानां पत्रिणामित्यतिकायातिकायजनकादिकायनिकाय्यवेधः सुसाध इति साधयति ॥ **विध्यद्भ्य** इति । लक्ष्यपातं कुर्वद्भ्यः ॥ १२ ॥

**आसीनेभ्यः** । ईदास इति साकारस्येकारः । उपविष्टेभ्यो रूपविशेषेभ्यो नमः । **शयानेभ्यः** शयौ हस्तावनयन्ति चेष्टयन्ति इति शयानाः परस्परं तलताडनादिकुर्वद्भ्य इति यावत् । अनेन योद्धृणां स्वभाव उक्तो भवति । लोके केऽप्याहवलवेनेरावराः शेरते हरेस्तु विद्रावितछिद्रस्य कदापि न निद्रा संभवतीत्यपितु तूर्ष्णीं निद्रामुद्रितताप्रदर्शनमेवेति इयं व्याख्या संख्यावन्मोदसंपादिकेति ज्ञेयम् ॥ १३ ॥

**स्वपद्भ्यः** स्वपत्सु इतरेषु जागृद्भ्यः । **जागृद्भ्यः** जागरूकेभ्यः तत्प्रवर्तकेभ्य इति यावत् । 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाण इति श्रुतेः ।' किञ्च निद्रा च 'प्राज्ञेनात्मना संपरिष्वक्त' इति प्राज्ञालिङ्गनम् । रामस्य तदात्मकत्वात्तत्प्रसक्तिरेव नास्तीति तात्पर्यमुक्तं भवति ॥ परपक्षे श्रुतिविरोधः स्फुट इति बहुनालम् । स्वपद्भ्य इति चतुर्थी सप्तम्यर्थे, **तिष्ठद्भ्य** इति वा **धावद्भ्य** इति वा अश्वेभ्य इत्युत्तरयजुष्पदेनान्वेति । तिष्ठद्भ्यः स्थितेभ्यः धावद्भ्यः इतस्ततर्धावमानेभ्यः ॥ १४ ॥

**अश्वेभ्यः** करणैः अत एवा**श्वपतिभ्यो** वो नमो नमः । सभाभ्यः कान्तिसहितेभ्यः आकृतिभ्य इति शेषः, एत्वाभावः छान्दसः । सभानां सुरसदसां पतयः पालकास्तेभ्यो नमः । यद्वाश्वाः व्याप्तज्ञानाः तेषां पतिभ्यः। अशू व्याप्तौ, वा गतिगन्धनयोः । अर्जुनविश्वरूपदर्शनसमये कृष्णोऽप्येवमाकार इत्यन्वयस्तत्पक्षे सुबोधः ॥ १५ ॥

**इति श्रीमन्नवरत्नपुमुत्तमकृतायां शतरुद्रिययथार्थप्रकाशिन्यां श्रीमन्मध्वसमयप्रदर्शितमार्गानुवर्तिन्यां ललितपदमञ्जर्यां यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥**

**॥ श्रीमन्मध्वांतर्गत वेदव्यासात्मक श्री लक्ष्मीहयग्रीवार्पणमस्तु ॥**

॥ श्री लक्ष्मीनारायणाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुराजो विजयते ॥ श्री गुरुभ्योनमः ॥

**नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः ॥ १ ॥ नम उगणाभ्यस्त्रिँहतीभ्यश्च वो नमः ॥ २ ॥ नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः ॥ ३ ॥ नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ॥ ४ ॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमः ॥ ५ ॥ नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥ ६ ॥ नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमः ॥ ७ ॥ नमो रथिभ्यो रथेभ्यश्च वो नमः ॥ ८ ॥ नमो रथेभ्यो रथपथिभ्यश्च वो नमः ॥ ९ ॥ नमः सेनाभ्यः सेनानिभ्यश्च वो नमः ॥ १० ॥ नमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमः ॥ ११ ॥ नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः ॥ १२ ॥ नमः कुलालेभ्यःकर्मारेभ्यश्च वो नमः ॥ १३ ॥ नमः पुंजिष्ठेभ्यो निषादेभ्यश्च वो नमः ॥ १४ ॥ नम इषुकृद्भ्योः धन्वकृभ्यश्च वो नमः ॥ १५ ॥ नमो मृगयुभ्यः श्वनिभ्यश्च वो नमः ॥ १६ ॥ नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥ १७ ॥ ॥ ४ ॥**

**नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः ॥ १ ॥**

एवं नानाकाराण्यनन्यसरूपाणि चानन्तान्यनन्तस्य सन्तीति चतुर्थे नानुवाकेनाह ॥ **नम आव्याधिनीभ्य** इति ॥ अरीणामाव्याधि प्रापकत्वादा-व्याधिनियस्ताभ्यो नमो नमः । आङा केन विचिकित्सकेन केनचिदगदेनाप्य-शक्यचिकित्सतां व्याधेराह । तेन च मरणमेवाव्याधिपदेन गृहीतं भवति । एतत्पदविशेषार्थस्तु प्राचिचीण इति तथा ज्ञेयः । विविधू विविधत्वेन नानावर्णाकृतित्वेन यंत्यों हि **विविध्यन्त्यः** ताभ्यो नमो नमः । विशेषेण विध्यन्त्यो वैरिण इति वा विविध्यंत्यस्ताभ्यः । विंध्यन्तीभिः प्रजाभी रहिता विविध्यन्त्योऽन्याप्रतिहतास्ताभ्य इति वा ॥ १ ॥

**नम उगणाभ्यस्त्रिꣳहतीभ्यश्च वो नमः ॥ २ ॥**

उरूत्कृष्टो गो ज्ञानं णो निर्वृतिरानन्दो यासां ताभ्यो नमः ॥ णश्च निर्वृतिवाचक इति वचनात् । त्रिं त्रीन् लोकान्हन्तुं समर्थाः त्रिꣳहत्य-स्ताभ्यः । अनेन नराशनशमनं सुशकमित्युक्तंभवति ॥ त्रिं त्रीन् त्रिवारशरीर-धरान् रावणकुम्भकर्णहिरण्यादीन्हन्तुं समर्थास्ताभ्यो वा । त्रिं त्रीन् सत्वादि-गुणान् हन्त्युपहरन्तीति तास्तथाभ्यो वा । अनेन भगवदाकृतीनां सर्वासां सांपरायदायकत्वमस्तीति सूचितं भवति ॥ २ ॥

**नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः ॥ ३ ॥**

**गृत्सेभ्यः** स्वाकांक्षावद्भ्योऽविद्भ्योऽधिकार्यधिकानामिति यावत् । **गृत्स-पतिभ्यः** गृत्सा सेवका कांक्षका कामदेवादयो वा तेषां पतयस्तेभ्यः वो नमो नमः । गृध् अभिकांक्षायां गृधिपण्योर्दकौचेति सूत्राद्गृधिति धस्य दकारे ततश्चर्त्वेन तकारे गृत् स गृत्स इति भवति । चर्त्वेन तकारे संभवति दकारविधानं भष्भावनिवृत्यर्थम् । नच तदेव विधीयतामिति शङ्क्यम् । चयो द्वितीया इति पक्षे थकारो मा हि भूदित्येतदर्थमिति ज्ञेयम् । वृतृ इत्यादिना सो विहितः सच चेनानुकृष्यत इति ज्ञेयम् । [1]'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि'ति भगवद्वचनात् ॥ ३ ॥

**नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ॥ ४ ॥**

व्रतस्येमे व्राताः सत्कर्मानुष्ठातारस्तेभ्यः लोकानुकरणाय संध्यादिकर्तारः इति भावः । यद्यप्यनेकानि रूपाणि प्रतीयन्ते तथापि नाणुमात्रं तेषु भेदः इति वा वदति ॥ **व्रातेभ्य** इति । प्रत्येकं गुणव्रातपूर्णेभ्यः । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।' 'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत' इति श्रुतेः । अव्रातेभ्यः व्रतानुष्ठाननिष्ठा हि व्राताः ते नभवन्तीत्यव्राताः

1. भ.गी.४-११

विध्यबद्धा इति यावत् । तेभ्यो नमो नमः इति वा । अव्राताः अत्यंता-भिन्नत्वेन भिन्नसमूहरहितास्तेभ्यो वा । लोके हि समूहो नाम भिन्नानेका-वयवमेलनं, सोऽत्यन्ताभिन्नभगवद्रूपेषु न संभवतीत्यव्रात इति ज्ञेयम्। व्रातस्य स्वस्वशरीरमात्रपोषणनिरतस्य । अत एव व्रातेन जीवतीतिसूत्रे व्रातशब्दस्यैवं व्याख्यानम् । देवव्रातस्य पतिभ्यो नमः । यद्वा भक्तकृतव्रतप्राप्यसुखादिकानि व्रातानि तेषां पतिभ्यः प्रापकेभ्यो वा । उभयत्रापि संबंधसामान्ये तस्येदमित्यण् (सू. ४-३-१२०) ॥ ४ ॥

**नमो गणेभ्यो गणपतिभ्यश्च वो नमः ॥ ५ ॥**

गणेभ्यो नारायण-वासुदेव-संकर्षण-प्रद्युम्न-अनिरुद्धपंचक, मत्स्यादि-केशवादि-अजादि-विश्वादिक-अवांतरादिका गणाः व्यूहाः तेंभ्यो नमः ॥ यद्वा अगो ज्ञातुमशक्य इतरैर्गन्तुमशक्यो वा णो येषां तेभ्यश्चागणेभ्यो नमः । गणानां गणशो गणशश्च विद्यमानानामेकादशरुद्राश्चतुर्दश इन्द्रा इत्यादिगणानां पतयः पालकास्तेभ्यो नमो नमः । यद्वा गणो गणना नास्ति येषां तेह्यगणास्तेभ्योऽ-सङ्ख्येभ्यः सङ्ख्ये भासमानेभ्यो रूपेभ्यो नमः । गणं देवतागणं पान्तीति गणपाः । सुरास्तेषां तिरानन्दो येभ्यस्तेभ्यो नम इति ॥ ५ ॥

**नमो विरुपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥ ६ ॥**

**विश्वरूपेभ्यः** विश्वस्मिन्भुवि दिवि च रूपाणि येषां तेभ्यः विश्वानि पूर्णानि रूपाणि तेभ्यो वा । विश्वं जगत् रूपयन्ति रूपनामवत् कुर्वंति इति ते तथा तेभ्यो वा विरूपेभ्य इति भगवद्रूपेभ्यो नमो नमः । आव्याधीनीभ्य इत्यादिस्त्रीलिङ्गप्रयोगेन सीतामेव सदा बाधामूलत्वेन चिन्तयतां नक्तंचरणां स्त्रीरूपाण्यपि भातानीतिं वा । पुंस्यपि स्त्रीशब्दाः संभाविता इति वा श्रुतौ स्त्रीलिंगप्रयोगः एषः स्त्री, एष पुरुष इति श्रुतिः । प्रकृतिश्च प्रतिज्ञा-दृष्टांतानुपरोधात् (ब्र.सू. १-४-२४) इति सूत्रात् । न षण्ढो न

पुमान्नजन्तुरिति भागवते चासाधारण्येनैकाकारतां पराकुर्वता बादरायणेन सर्वरूपता भगवत उक्ता भगवता । [1]'स्त्रीशब्दाश्च निषेधार्थाः सर्वेऽपि ब्रह्मवाचकाः' । 'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः । ता एव परमा विद्या यदा विष्णोस्तु वाचकाः' । 'सर्वे शब्दाः सर्वघोषा' इत्यादि वचनात् स्त्रीशब्दा अपि भगवत्परा ज्ञेयाः इति सूचितम् ॥ ६ ॥

**नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमः ॥ ७ ॥**

इदानीं यद्यदाकारा राक्षसास्तत्तदधिकाकारा रामरूपविशेषाः तेषां प्रतीता इति महामाहात्म्यं सप्तमेन यजुषा भाषते । **नमो महद्भ्य** इति ॥ **क्षुल्लकेभ्यो**ऽणु-रूपेभ्यो रक्षेभ्यः । राक्षसान्हेतूकृत्याथवा तदर्थं महद्भ्यस्तद-पेक्षयातिकायेभ्यो रामरूपेभ्यो वो नमो नमः । स्तोकाल्पक्षुल्लका इत्यमरः ॥ ७ ॥

**नमो रथिभ्यो रथेभ्यश्च वो नमः ॥ ८ ॥**

**नमो रथेभ्यो रथपथिभ्यश्च वो नमः ॥ ९ ॥**

**रथेभ्यो** रथो येषामस्ति ते रथाः । अर्श आदिभ्यो अजित्यच् । रथवद्भ्यो राक्षसेभ्यः । रथि राक्षसार्थम् । एवमुत्तरत्र सर्वत्र ज्ञेया चतुर्थी । **रथिभ्यः** स्वयमपि रथवद्भ्यः । **रथेभ्यः** गतिमद्भ्यः रथगतौ । **रथपतिभ्यः** अतिशीघ्र-गतिभ्यो रामरूपेभ्यो नमोनमः । य द्वाऽरथिभ्यो रथिभिन्नेभ्यो रक्षोभ्यः । अरथेभ्यः स्वयं रथरहितेभ्यः पादचारिणो वैरिणो हन्तुं चरणचरा एव रामा अनेकेऽनुसस्रुरिति भावः । अनेन सत्यपि महावैभवे वैरी यादृगायुधवाहनो निर्वाहनायुधो वा तादृक्षेणासदृक्षेणापि भाव्यमिति मतिन्यायममानयद्रघुनायक इति ज्ञायते ॥ ८,९ ॥

**नमः सेनाभ्यः सेनानितिभ्यश्च वो नमः ॥ १० ॥**

**सेनाभ्यः** परसेनाभ्यः **सेनापतिभ्यः** सेनानायकरूपेभ्यो वो नमोनमः ॥१० ॥

1. अनुव्याख्यानं ३२६ श्लोक (अ. १-४ पाद)

**नमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमः ॥ ११ ॥**

**क्षत्तृभ्यः** क्षत्तृभ्यः अरीन् क्षपयद्भ्यः शकलीकुर्वद्भ्यो वा रक्षोभ्यः दौवारिकेभ्यो वा, क्षत्रियायां शूद्राज्जातेभ्यो वा । एकदेशविकृतन्यायेन क्षत्तृण्ये व क्षत्तारो ज्ञेयाः । तृन् तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटाविति क्षदिः सौत्रोधातुः शकलीकरणे भक्षणे, क्षत्ता स्यात्सारथौ द्वाः, स्थे क्षत्रियायां च शूद्रजे सूत्रकौमुद्यमराः, 'शतं मेषान्वृकये चक्षदानं उक्षाणं वा वेहतं' वा क्षदन्त इति मन्त्रब्राह्मणमूलकता च सूत्रस्य ज्ञेया । **सङ्ग्रहीतृभ्यः** क्षतृराक्षसान् मुष्टिभिः सङ्गृण्हद्भ्यः वो नमो नमः । ग्रहणविशेषणेन समा चासामर्थ्यं स्वमोचने सूचयति तेषाम् । सङ्ग्राहो मुष्टिबन्धः स्यादित्यमरः । रथान् शरीराख्यान् कुर्वन्ति । [1]पुनः ''पुनः कृतानि तानि पुनरेव समुत्थितानि ॥ [2]चतुर्भुजो भूत्सपुनर्द्विशीर्ष'' इत्याद्युक्तप्रकारेणेति । तेभ्यः तक्षभ्यः तदतनु तनुतनूकरणपटुभ्यः रथनं रथःगतिरिति यावत् । तं कुवतीति रथकारा अन्तर्हितराक्षसास्तेभ्यस्तक्षभ्यो वा नमो नमः । यथा तक्षाणो ध्वनोद्धने [3]तारवं दारु तक्षन्ति तथा तक्षभ्यः प्रतिदिव इति कनिन् ॥११॥

**नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः ॥ १२ ॥**

**तक्षाणो** वर्धक्यः । तक्षको नागवर्धक्योरिति चामरः ॥ १२ ॥

**नमः कुलालेभ्यःकर्मारेभ्यश्च वो नमः ॥ १३ ॥**

**कुलालेभ्यः** कुत्सिता लाला स्यन्दिनी येषां ते कुलालाः अपस्मारादि दोषिणस्तेभ्यः । सृणिका स्यंदिनी लालेत्यमरः । **कर्मारेभ्यः** पुनः तत्कृतं कर्म निमित्तीकृत्य अराणि दोषा अरं रमणविरुद्धं दुःखं वा यै रामरूपैस्तेभ्यो वो नमो नमः । यद्वा कुलानि स्त्रीकुलमात्रमालान्तीति कुलालाः व्यभिचारशीलाः तेभ्यस्तान्प्रतिकर्मारेभ्यः । तत्कृतदुष्कृतफलदोषप्रापकेभ्यो वो नमो नमः ॥१३॥

---

1 ग.भा.ता.नि. ८-२११, 2. ग.भा.ता.नि. ८.६०, 3. तारवं तरुसंबंधि

**नमः पुंजिष्ठेभ्यो निषादेभ्यश्च वो नमः ॥ १४ ॥**

**पुञ्जिष्टेभ्यः** पक्षिघातुकयातुधानेभ्यः । **निषादेभ्यो** व्याधवन्मारकेभ्यो वो नमो नमः ॥ १४ ॥

**नम इषुकृद्भ्यो धन्वकृभ्यश्च वो नमः ॥ १५ ॥**

**इषुकृदभ्यो धन्वकृद्भ्यश्च** वो नमोनमः इषुभिः करणैः कृतन्ति परानिति तेभ्यः । धन्वना धनुषा किरन्ति क्षिपन्ति शरानिति तेभ्यः ॥ १५ ॥

**नमो मृगयुभ्यः श्वनिभ्यश्च वो नमः ॥ १६ ॥**

**श्वभ्यः** श्वान इव भषन्तस्तेभ्यो रक्षोभ्यः । **मृगयुभ्यो** मृगघातका इव विद्यमानेभ्यः । **श्वनिभ्यः** शुआश्चर्यकरोऽनयति चेष्टयतीत्यनः स एषु तेऽनिनः ॥ १६ ॥

**नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥ १७ ॥**

दशकण्ठविंशतिबाहुकत्वेनाश्चर्यकररावणस्वामिकाः श्वनिनः तेभ्यः **श्वपतिभ्यः** आश्चर्यकरशिक्षाकर्तृत्वेन पतिरहितेभ्यो नमो नमः । तेषां न वर्तते सर्वथा स्वामीति वाह । **श्वपतिभ्य** इति ॥ स्वे च ते पतयश्चेति तेभ्यो नमो नमः । सस्यशस्तु प्राचीवज्ज्ञेयः । सु अत्यन्तं अपतिभ्यः स्वेतरस्वामि-रहितेभ्यो वा । शावशेरासाविति सूत्रव्याख्यानावसरे शुआश्चर्ये इति कौमुद्यामाश्चर्यकत्वेन शुशब्दो व्याख्यातः । श्वन्नुक्षन्निितिनिपातितः श्वशब्दः बलिभुग्वाची । श्वा सारमेय इत्यमरः ॥ १७ ॥

नमो महद्भ्य इत्यारभ्य श्वपतिभ्य इति पर्यन्तमेकं राक्षसपरं पदमेकं रामपरं क्वचिदुभयं रक्षःपरं क्वचिदुभयपरं चेति विवेकः । चास्तु भगवद्वाचक-पदसमुच्चये ज्ञेयाः । क्षुल्लकहन्तृमहद्भ्य इत्येकं यजुरेकाविधा ततश्चाद्यन्तयो-र्मङ्गलार्थनमः शब्दावपेक्षिताविति नैकनमःपदवैयर्थ्यम् । सर्वरक्षोरूपाणि

रामरूपाणीवेतररक्षसां भातानीति सर्वविशेषणानि रामपराणि वा ज्ञेयानि । तत्रात्यन्तासम्भावितानां श्वभ्यःश्वपतिभ्यः श्वनिभ्यश्चेति विशेषणानामर्थस्तु अथातः शौव उद्गीथ इत्यादि छन्दोगोपनिषदि विवृतो द्रष्टव्यः । श्वरूपाणि इतरा देवाः तेभ्यः । श्वनिनो मुख्यप्राणाः श्वाननतारस्तेभ्यो देवेभ्यो मुख्यप्राणरूपेभ्यः श्वपतिभ्य आश्चर्यकरपतिभ्यो रामरूपेभ्यो नमो नम इति । तथाच रक्ष आदिसमाननामरूपाण्युक्तानि श्रीमहारामायणे[1] ॥

''प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम् ॥ इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः'' ॥ २३ ॥एष हन्ति गजानीकमेष हन्ति महारथान् ॥ एष हन्ति शरैस्तीक्ष्णैः पदातीन्वाजिभिः सह ॥ २४ ॥ इति ते राक्षसाः सर्वे रामस्य सदृशान् रणे । अन्योन्यं कुपिता जघ्नुः सादृश्यात् राघव(क्षस)स्य ते ॥ २५ ॥ न ते ददृशिरे रामं दहन्तमरिवाहिनीम् ॥ मोहिता परमास्त्रेण गान्धर्वेण महात्मना ॥ २६ ॥ ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः ॥ पुनः पश्यन्ति काकुस्थमेकमेव (महाहवे) महारथम् ॥ २७ ॥ भ्रमन्तीं काञ्चनीं कोटिं कार्मुकस्य महात्मनः ॥ अलातचक्रप्रतिमां ददृशुस्ते न राघवम् ॥ २८ ॥ शरीरनाभिसत्वार्चिः शरीरं नेमिकार्मुकम् ॥ ज्याघोषतलनिर्घोषं तेजो बुद्धिगुणप्रभम् ॥ २९ ॥ दिव्यास्त्रगुणसंपन्नं निघ्नन्तं युधि राक्षसान् ॥ ददृशू रामचक्रं तत्कलचक्रमिव प्रजाः ॥ ३० ॥

इति श्रीमन्नवरत्नपुमुत्तमकृतायां शतरुद्रिययथार्थप्रकाशिन्यां श्रीमन्मध्वसमयप्रदर्शितमार्गानुवर्तिन्यां ललितपदमञ्जर्यां यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

॥ श्रीमन्मध्वांतर्गत वेदव्यासात्मक श्री लक्ष्मीहयग्रीवार्पणमस्तु ॥

1. वा.रामायणे युद्धकांडे ९३ सर्गे २३-३०

**॥ श्री लक्ष्मीनारायणाय नमः ॥**

**॥ श्री गुरुभ्यो नमः ॥ श्रीमदानन्दतीर्थगुरुराजो विजयते ॥**

**नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च सितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरीशाय च सिपिविष्टाय च ॥ १ ॥**

अन्तरंकुरितहर्षपरोक्षपारवश्येन निर्वचनतोऽनेकगुणवचनैर्नामभी रामं स्तौति ॥ **नमो भवायेति** ॥ **भवाय** मङ्गलरूपाय अथवा भवाय संसाररहिताय नित्यमुक्तायेति यावत् । उत्पत्तिरहिताय वा । भवौ जन्महरावित्यमरः । भवो भद्रे सृतावपीत्यभिधानम् । **रुद्राय** रुक्द्रावकाय, शत्रून्रोदयित्रे वा । रोदेर्णि लुकुचेति सूत्रात् । ननु सोऽरोदीदिति रोदनकर्तृत्वेन रुद्रशब्दो रोदनकर्तरि निरुक्तः । ततः सूत्रस्य श्रुतिविरोध इत्याशङ्कापूर्वमस्माभिरेव निराकृतेति नेह प्रपञ्चने । **शर्वाय च नमो नमः** । शृणातीति शरुः कोपी रावणः तं तत्कोपं वा तदायुधं वा वाति गन्धयति हिनस्तीति शर्वः तस्मै । शॄस्वृस्निहित्यादिना उः । शरुरायुधकोपयोरित्यभिधानम् । उलोप स्छान्दसः । वा गतिगन्धनयोः गतिः गन्धनं हिंसेति व्याख्यानात् । **पशुपतये** सर्वत्रापि भगवन्तं तत्तद्योग्यतानुसारेण समं पश्यन्तीति मतिमन्तः पशवस्तेषां पतये । **नीलाग्रीवाय** । नीलस्य तन्नामककपेः ग्रीवा यस्मात् तस्मै । नीलमौलौ निपतत्पलपलाशिशूलमाला वि राघवेन लाघवेन इति नीलगलदायीति नीलग्रीवो राम इति भावः । **सितिकण्ठाय** षिञ्बन्धने । भावे क्तः । सितं बंधः येषामस्ति ते सितिनस्तेषां कं दुःखमिश्रं सुखम् । संसारिणां कमुभयरूपं ठं शून्यं करोतीति सितिकण्ठः । अव्ययत्वात्कमिति द्वितीयाया अलुकि वा ज्ञेयम् ॥ भौतिकसुखवर्जितान्कृत्वा स्वरूपसुखं करोतीति भावः । ठकारः शून्यवाचकः । विदा ज्ञानेन ठान् शून्यानित्यादि वचनात् । ठोमहेशे महाध्वाने शून्ये चन्द्रस्य मण्डले इति विश्वाच्च । **कपर्दिने** जटाजूटवते ।

**व्युप्तकेशाय** व्युप्तानि छिन्नानि कानि शिरांसि रक्षसां यथा भवति तथा याः रमाकारसीतायाः शं यस्मादसौ व्युप्तकेशस्तस्मै । कृष्णपक्षे व्युप्ताः छिन्नाः केशाः रुग्मिकेशा येनेति स्पष्टोऽर्थः ।। **सहस्राक्षाय** बहुनेत्राय । अनेन सहस्राक्षः सहस्रपादिति पुरुषसूक्तसमाख्ययात्रापि श्रीपतिरेव प्रतिपाद्य इति ज्ञायते । **शतधन्वने,** शतं धन्वानि धनूंषि यस्य तस्मै वा । कृष्णपक्षे शतधन्वने तन्नामकदितिसुताय शर्वाय हिंसकायेत्यर्थो ज्ञेयः ।। इतरत्स्पष्टम् ।। गिरौ चित्रकूटे शेत इति गिरिशस्तस्मै, गिरौडश्छन्दसीति डः । गिरिर्गन्धमादनस्तद्वान्वा गिरिशः । लोमादित्वाच्छः । तेन शं मृतकप्रतीक-कपिजीवनजनितं यस्येति वा तस्मै । एतादृशे **सिपिविष्टाय** गरुडारूढाय च नमो नमः । विष्णुः सिपिविष्ट इति श्रुतेः । यद्वा रणे रामशरेण शीर्णशरीरा मरणभीरवः शर्वरीचराः शरणं शर्वमुपागुरित्यवग-मयति ।। **नमो भवायेति** ।। आर्ता देवान्नमस्यन्तीतिवचनात् । **नीलग्रीवायेति** जत्रुरूपग्रीवैकदेशेन । सितिकण्ठायेत्युर्वरितसर्वशिरोभागेनेति विवेकः । सिपिविष्टाय तन्नामकाय रुद्राय । सिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वर इत्यमरः । दाशरथिशरशीर्ण कर्णनासिकाबाहुपादमुखं विलोक्य हा त्रिलोचन मोचय शरांच्चयादिति याचयामासुरासुरा इति भावः ।। ''रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः । शर्वःशं रोधनाद्धरिः'' इत्यादि श्रीमद्भाष्योदाहृतप्रमाणतो विशेषोऽवसेयः ।

**नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चा वस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च ।। २ ।। ।। ५ ।।**

गुणपूर्णस्य नासुरहिंसादिना सौवं फलमुपलभ्यते भगवतोऽपि त्वस्मदादि-कृपापारवश्येनैदृशी प्रवृत्तिरिति वदति । **नमो मीढुष्टमायेति** ।। मीढ्वांसो हि भवंत्यभीष्टसेचकास्तेषु श्रेयान्मीढुष्टमः भक्तमौक्तसुखदातृश्रेष्ठाय ते नमो नमः ।

इषुमते च नमः । नैकाकार एव रमारमण इत्याह ।। **ह्रस्वायेति** ।। ह्रस्वायाणुरूपिणे । तन्नामाह । **वामनायेति** ।। वामन एव राम इतीयमुक्तिः । अत एव श्रीमदुक्तिः [1]'सहस्रनेत्रावरजङ्गविष्टमिति' । वाम एव वामनः सुन्दरः । वैरिवक्रो वा तस्मै नमः । वामः वाधातोरर्तीत्यादिना मनि वामः । वामः शोभनदुष्टयोरित्यभिधानात् । वामौ वल्गुप्रतीपौ चेति वकारान्तामरः । वामनाय ह्रस्वाकृतिमते अनन्तरम् अह्रस्वाय त्रिविक्रमरूपिणे वा । खर्वोह्रस्वश्च वामन इत्यमरः । **बृहते** गुणपूर्णाय व्याप्ताय वा । ते च नमो नमः । **वर्षीयसे** बाणवर्षणकर्त्रे च नमो नमः । वृद्धाय जगदादित्वेन **वृद्धाय** च नमः । 'भूतादिर्निधिरव्यय' इति वचनात् । न केवलं स्वयं वृद्धः किन्तु सतामभिवृद्धिदोऽसतांछेदकश्चेत्याह ।। **संवृध्वन** इति सम्यग्वर्धयति साधूनिति संवृध्वा । तथैवासाधून् छिनत्तीति स तस्मै च नमो नमः । वृधु वर्धने । छेदनं च वर्धनम् । वर्धकीति यथानाम तक्ष्णः । **अग्रियाय** जगदग्रे भवाय । 'सदेव सौम्य इदमग्र आसीदि'तिश्रुतेः । अग्राच्चेत्यग्रशब्दाद्वा द्भवार्थे घः । तत इयि अग्रिय इति भवति । प्रथमाय अधुना दशास्यन्दनेषु **प्रथमाय** च नमः । प्रथेरमन् मुख्यायेति वा । अश्नुते सर्वमित्या शुस्तस्मै । कृवायाजिमिस्वदिसाध्यशूभ्य उणित्युणि आश्विति शैघ्रवाच्यव्ययम् । उकारान्तश्चाशुशब्दोऽस्ति, आशुंव्रीहिः पाटलस्यादित्यमरः । **अजिराय** नित्यगतिदात्रे प्रतिक्षेपकाय वा । अज गतिक्षेपणयोः अजेर्व्यघञपोरिति वीभावाभावोऽजिरशिशिरेति निपातनाज्ज्ञेयः । यद्यप्यजिरं विषये काय इत्यमरादजिरशब्दोऽन्यत्र रूढः । तथापि धात्वर्थविवक्षया योग्यत्वाच्चायमर्थो ज्ञेयः सकलदृष्टिविषयाय, इदानीं कायनिकाय्यवते वा । उक्तामरादिमौ अर्थौ ज्ञेयौ । **शीघ्रियाय** क्षिप्रप्रसादकारिणे । **शिनां** सुखवतामिभ्यः स्वामी तस्मै । इभ्यः स्वामिनि चेभग इत्यभिधानम् । ऊर्मिमूर्मिकामङ्गुलीयकं यापयति सीताम् इति **ऊर्म्यः** तस्मै । ईकारलोपः । अङ्गुलीयकमूर्मिकेत्यमरः । **अवस्वन्यायचेति** ।। अवेति स्वनः शब्दो येषु तेऽवस्वनिनः । यद्यपि नौगदेत्यादिना निपूर्वका-

1. म.भा.ता.नि. ४-१४

त्स्वनधातोर्विहितोऽप् । तथाप्यन्युपसृष्टादप्यवसेयः । तैर्याप्यः प्राप्य इति अवस्वन्यः । तस्मै छन्दसि सहसुपेति योगविभागात् तिङा च सुपा समासः । यद्वावेत्यव्ययं विभक्ति प्रतिरूपकम् अस्ति क्षीरगौरितिवत् । स्रोतसीं महाप्रवाहवर्ती भागीरथीमिति यावत् । यापयति भूमिमिति **स्रोतस्यः** तस्मै, यद्वा स्रोतसि समुद्रप्रवाहे भवः स्रोतस्यः स्रोतसो विभाषाड्यड्याविति डयति डये वा रूपम् । द्वीपे भवो द्वीप्यः व्यासरूपेण द्वीपे जननात् । द्विरापोगच्छन्ति येषु ते सप्तद्वीपाः तत्र भवः स्वामित्वेन विद्यमानो **द्वीप्यः** सप्तद्वीपाधिपतिः रामः । द्व्यन्तरूपसर्गेभ्योऽप ईत् । अप इति कृतसमासानुकरणम् । ततश्चाप आकार इति द्वीपमिति भवति । यद्यपि द्वीपादनुसमुद्रं यञिति ञित्वादादिवृद्धौ द्वैप्य इति भाव्यं तथापि वृध्यभावश्छान्दसः यप्रत्ययो वेति ज्ञेयम् ॥ ५ ॥

**इति श्रीमन्नवरत्नपुमुत्तमकृतायां शतरुद्रिययथार्थप्रकाशिन्यां श्रीमन्मध्वसमयप्रदर्शितमार्गानुवर्तिन्यां ललितपदमञ्जर्यां यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥**

**॥ श्रीमन्मध्वांतर्गत वेदव्यासात्मक श्री लक्ष्मीहयग्रीवार्पणमस्तु ॥**

॥ श्री लक्ष्मीनारायणाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुराजो विजयते ॥ श्री गुरुभ्योनमः ॥

**नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय च ॥ १ ॥ चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च ॥ २ ॥ नमो याम्याय च क्षेम्याय च नमः उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥ ३ ॥ ॥ ६ ॥**

**नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय च ॥ १ ॥**

विश्वामित्रो दशरथपुत्रस्य पतत्रिरथस्य चित्रचरित्रतां षष्ठेन स्पष्टमाचष्टे । **नमो ज्येष्ठायेति** ॥ **कनिष्ठाय** तनुतनुमते वामनरूपिणे वा । नेदं नियताकार इत्याह । ज्येष्ठायेति ॥ त्रिविक्रमरूपिणे । गुणैर्वा ज्येष्ठः तस्मै । कनिष्ठाया-कारतो ज्येष्ठाय गुणत इति वा । प्रशस्यस्य श्रः । ज्यचेतीष्ठनि परतो ज्यादेशः । प्रशस्यो ज्येष्ठः । ज्या इष्ठनि आद्गुण इति गुणे ज्येष्ठ इति भवति। युवाल्पयोः कनन्यतरस्यामिति कनिष्ठ इति भवति । पूर्वस्मिन् सृष्ट्यग्रे जायते इति **पूर्वजो** नारायणस्तस्मै । सप्तम्यां जनेर्ड (सू.३-२-९७) इति डः । एवमुत्तरत्रापि । **अपरजाय** । अपरस्मिन् सृष्ट्यनंतरकाले अवतार-रूपेण जायत इति तस्मै । अपगताःरजःशब्दोपलक्षिताः दोषाः अपगतं गुणत्रयकार्यं संदंशन्याजेन रजः पदेन गृह्यते । अपगतं रजो वा यस्मादिति अपरजस्तस्मै, नच रजःशब्दस्सान्त इति कथमपरजायेति वाच्यम् । अकारान्तोऽत्र रजःशब्दः । अत एव भारते । ''शिरोवाची, शिरोदन्तो रजोवाची रजस्तथा । निचकर्त शिरान्द्रौणिरर्थाः पादरजोपमा'' इति ॥

श्रीमदुक्तिश्च 'धर्मं महान्तं विरजंजुषाणा' इति ॥ मध्ये क्षीरसमुद्रमध्ये भवतीति **मध्यमः** क्षीरसमुद्रशायी। तस्मै नमः। यद्वा मध्ये चण्डकरमण्डल-मध्ये जगन्मध्ये वा भवस्तस्मै। ''ध्येयः सदा सवितृमण्डलमध्यवर्ती ॥ अन्तर्बहिश्चतत्सर्वं व्याप्य नारायणः स्थित'' इत्यादि श्रुतिस्मृतिभ्यः। यद्वा मध्ये पूर्वोत्तराक्षरयोर्मध्ये मो मकारो यस्य पदस्य तत्पदवाच्याय कनिष्ठायेत्य-नेनैवेदमन्वेति ॥ कनिष्ठाय लघुरूपाय नामतो वामनरूपाय नम इति फलति॥ मध्यान्म इतिमः ॥ १ ॥

**चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च ॥ २ ॥**

ननु सूनुर्दशरथस्यायमिति कथं परमात्मतादात्म्यमस्येत्यत आह ॥ **अपगल्भायेति**। अपगतो गल्भो गर्भो यस्मात्तस्मै। गर्भवासशून्यायेति यावत्। रेफलकारयोरभेदादेवमुक्तिः। [1]''नायं दशरथाज्जातो न चापि जमदग्नितः। [2]नशुक्लरक्तप्रभवोऽस्यदेह'' इत्यादेश्च जघन्यः प्रलये सकललय एक एवान्ते भव इति जघन्यस्तस्मै, भवानेव वर्तते न भव इति भावः। जघन्योऽतेऽधमेऽपिचेत्यमरः। हन्तेः शरीरावयवे द्वे चेति जघनमिति भवति। संसारोऽपि कंसारित एवेति शंसति ॥ बुध्नियायेति ॥ सकलबन्धकायेत्यर्थः। बन्धेर्ब्रधिबुधीचेति कनि बुध्न इति भवति ॥ बुध्नएव बुध्नियः स्वार्थे घः। विश्वाख्याश्वत्थमूले भवो बुध्नियस्तस्मै वा। 'ऊर्ध्वमूलमि'त्यादि भगवदुक्तेः। स्थावरजङ्गमस्थानसंस्थानशक्तेः कपिकटकघटकता लोकानुकरणमित्याह। **सोभ्यायेति** ॥ ऊनामुत्कृष्टानां दुष्टानां भीर्यस्मात्सोभीः (उभीः) सुग्रीवः सहित उभियेति सोभीः कपिसमुदायस्तत्र नियामकत्वेन भवः सोभ्यस्तस्मै। यद्वोभाभ्यां सीताऽलक्ष्मणाभ्यां सहितं सोभं वनं तत्र भवाय वा। ननु सहस्य सः संज्ञायामिति न सहस्य सोऽसंज्ञात्वादिति चेत्। ग्रन्थान्ताधिकेचेति सूत्रे

1. म.भा.ता.नि. २-७८, 2. म.भा.ता.नि. १२-६१

**आधिक्ये सहस्य स विधानात्** । अधिकेनार्कजेन सहिता कपिसेनेति युक्तः सः । यद्वा **समानस्य सः** । समाना उभियेति सोभीः । समानस्य छन्दस्य मूर्धप्रभृत्युदर्केष्विति सोभीस्तत्र भवः सोभ्यः तस्मै । अनुत्तरपदत्वात्कथं स इति चेत् । समानस्य इति योगविभागात् सः । तथाचोक्तं काशिकायां सपक्षः सधर्मसाजात्यमित्यादि सिध्यतीति ॥ अनूरुसूतसुतसमवानरसेना-मध्यस्थायेति भावः । ज्ञानिप्राप्यो भवानित्याह ॥ **प्रतिसर्यायेति** ॥ स्थिरतया सर्तुं गन्तुं योग्यस्तस्मै मुक्तौ गम्यायेत्यर्थः ॥ सृगतौ । यद्यपि सृस्थिर इति घञि सारस्ततो यति सार्य इति भवितव्यम् । तथापि बाहुलकः टः ततो यति प्रतिसर्य इति भवति । पुरोऽग्रतोऽग्रेषु सर्तेरिति सूत्रेण एदन्ताग्रेशब्दात्परत एव सर्तेष्टो विहितोऽतः कथं यूथं तदग्रसरगर्वितकृष्णसारमितीत्याशङ्क्य बाहुलकाट्ट इतिहरदत्तोक्तेरिहापि तथैवेति न दोषः । प्रतिसरो विवाहदीक्षा-बन्धस्तमर्हतीति वा प्रतिसर्यः । सीताशयानुसारेण शयग्रहणं सत्वरं भवतीति भावः ॥ २ ॥

**नमो याम्याय च क्षेम्याय च नमः उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥ ३ ॥**

सर्वशर्वरीचरगर्वशमनानन्तरं निरंतराविरहापि जानकी जगदनुकुर्वन्ती जगज्जनक त्वामभिनन्दयतीत्याह ॥ **नमो याम्यायेति** ॥ अस्य स्त्री ई तया आम्यः गम्यः प्राप्यस्तस्मै । अम गत्यादिषु । यद्वा नियामकोऽपरो नास्ति सर्वपरस्येत्याह । **अयाम्यायेति** ॥ याम्यो नियम्यः स न भवतीति अयाम्य अन्यानियम्यः । अनुपसर्गसंसर्गात् यगाद्यगात् गदयदचरयमश्चानुपसर्गे (सू. ३-१-१००) इति ण्यत् यद्वाऽधनेन भाव्यः । तथापि छान्दसो ण्यत् । यद्वा

यम उपरमे । उपरमो हि विनाशः । यम एव यामः । स्वार्थे घञ् । अण्वा, तदर्हः नेति चायाम्यः । क्षेमः प्राप्तपरिपालनं लोकानां तत्र भवः क्षेम्यस्तस्मै । लोकक्षेमंकरायेति यावत् । यद्वा क्षेमे नित्यं कुशलवति । कुशलं क्षेममस्त्रियामित्यमरः अर्तिस्तुह इत्यादिना(उ.सू. १३७)मनि क्षेमेति ज्ञेयम् । वैकुण्ठे भवायेति वा । महन्महान् राम एवेत्याह ।। **उर्वर्यायति** ।। उरूणां ब्रह्मादीनामर्यः **स्वामी तस्मैच** नमः । ऋगतौ । अर्यः स्वामिवैश्ययोरिति सूत्राद्यत् ण्यतोऽपवादः स्यादर्यः स्वामिवैश्ययोरित्यमरः । स्वं स्वरूपसुखं खलंति फलत्वेनेति खलाः मखमुखसद्व्यापाराः तद्वंतः संतो हि खलिनः । तत्र भवः **खल्यस्तस्मै** । तानर्हति स्वार्हकत्वेनेति वा खल्यः तस्मै । 'वसंति वैष्णवा यत्र तत्र सन्निहितो हरिरि'ति वचनात् । **श्लोक्याय** । उत्तम-कीर्तनीयाय। यशस्विने । पद्ये यशसि च श्लोके इत्यमरः । अवसाने सर्वावसाने भवो**ऽवसान्यः** तस्मै । सर्वं संहृत्य एक एव विद्यमान इति यावत्। संशांतसंविदखिलं जठरे निधाय (म.भा.ता.नि. १-२) इति श्रीमदुक्तेः । अनंतावतारवान्भवानेवेत्याह । **वन्यायचे**ति । वने जले भवो वन्यो मत्स्याद्यात्मा तस्मै । जीवनं भुवनं वनमित्यमरः । इदानीं रामरूपेण कक्षे रणाद्यात्मके वने भवः **कक्ष्यस्तस्मै** । कक्षौ तृणवीरुधावित्यमरः । वराहरूपाय वा । **श्रवाय** । **श्रवः** प्रतिज्ञा अस्यास्तीति श्रवः अच् पूर्ववत् । योत्स्य इति प्रतिज्ञावद्रिपुमुद्दिश्येतियावत् । **प्रतिश्रवाय** हनिष्यामीति प्रतिज्ञा-कर्त्रे नमः । आश्रव संश्रवाः प्रतिश्रवा इत्यमरः । श्रवः प्रतिश्रव प्रतिश्रवा इत्यमरः । श्रवः सामान्यतोऽसुरहननविषयः । प्रतिश्रवो रावणादिदितिज-विशेषविषय इति वा विवेकः । आसम्यक् करोति व्यङ्गप्लवङ्गानिति तादृशः शुषेणस्तन्नामा भिषक् यस्य सेवकत्वेन स **आशुषेणस्तस्मै** । सस्य शः पूर्ववत् । तथा च श्रीमदुक्तिः । [1]"तारापिता तान्निरुचश्चकार सुषेण नामा भिषजां वरिष्ठ" इति ।। आशु शीघ्रगामी रथो यस्य तस्मा **आशुरथाय** च

1. म.भा.ता.नि. ८-२२५

नमः । **शूराय** वीराय । शूरो वीरश्च विक्रान्त इत्यमरः । शुसिचिमीनां दीर्घश्चेति कनि दीर्घे च शूर इति भवति । शु इति सौत्रोधातुः । अत एव अव **भिन्दते** अरिषु अंगभङ्गदाय । **वर्मिणे** कवचिने रिपवे रिपुं प्रति इति यावत् । कवचिने तनुत्रवते । यत्साधनः शत्रुरायोधने तत्साधनेन बाधकेनापि भाव्यमिति कवची राम इति भावः । तनुत्रं वर्मकवचो स्त्रियामित्यु-भयतश्चामरः । **वरूथिने** रथगुप्तिभागवते । जॄवृञ्भ्यामूथन् इत्यूथनि गुणे रपरे वरूथ इति भवति । रथगुप्तिर्वरुथो नेत्यमरः । [1]बिलः बिलस्य पातालस्य मा संपद्येन स बिल्मो, बिले शयाति शयवान् शेषः सोऽनुजत्वे-नास्तीति **बिल्मी** तस्मै । ईशः ईदृशः इति न स्तोत्रमात्रमपितु वेदा वेदयन्तीत्थमित्यावेदयति । **श्रुतायेति** । श्रुतिबोधिताय ॥ **श्रुतसेनाय** ॥ श्रुता प्रसिद्धा सेना चमूः यस्यः स श्रीमद्रामाय च नमो नम इति । परपक्ष आशुषेण श्रुतसेन शब्दयोरिव वर्मिकवचि-शब्दयोः पुनरुक्तिः स्फुटैवेति ज्ञेयम् ॥ ६ ॥

**इति श्रीमन्नवरत्नपुमुत्तमकृतायां शतरुद्रिययथार्थप्रकाशिन्यां श्रीमन्मध्व-समयप्रदर्शितमार्गानुवर्तिन्यां ललितपदमञ्जर्यां यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥**

**॥ श्रीमन्मध्वांतर्गत वेदव्यासात्मक श्री लक्ष्मीहयग्रीवार्पणमस्तु ॥**

---

1. बिल् शब्दः हलन्तः

॥ श्री लक्ष्मीनारायणाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुराजो विजयते ॥ श्री गुरुभ्यो नमः ॥

**नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च नमः श्रुत्याय च पथ्याय च नमः ॥ १ ॥ काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च ॥ २ ॥ नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय च तप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥ ३ ॥ ॥ ७ ॥**

**नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च नमः श्रुत्याय च पथ्याय च नमः ॥ १ ॥**

सप्तमेन दीनानुकंपाप्रकटनपूर्वकं सन्मार्गप्रवर्तकत्वाद्याह । **नमो दुन्दभ्यायेति** ॥ दुन्दुभः दुन्दभीन् अययति वादनद्वारा दिक्ष्विति दुन्दभ्यस्तस्मै। ये मोक्षेच्छवस्ते मया सह गच्छत्विति दुन्दुभिघोषं कारयित्रे च नमः । ''समायात समायात ये ये मोक्षपदेच्छवः । एवमाद्योषयद्राम'' (म.२-) इत्यादि वचनात् । अनेनोपश्वासयेति श्रुत्यर्थः सङ्गृहीतः । भेरी स्त्री दुन्दुभिः पुमानित्यमरः । यद्वा रावणमारणानन्तरं गम्भीरभेरीरावेन जगति जयं ख्यापयित्रे नमः । हननवन्तो हि हनिनः । तेषु भवो हनन्यः स न भवतीत्य**हनन्यः** । संहार्येतरोऽसंहार्य इति यावत् । आ सम्यघ्घनन्याः संहार्या अनेके यस्य सर्वसंहारकं इति भावः । **धृष्णवे** आहवे धीराय । त्रसिगृधिधृषिक्षिपेः क्नुरिति धृष्णुः । **नमःप्रमृशाय च** । प्रपञ्चान्तर्बहिर्वर्तमानतया शुभाशुभकर्मसाक्षिणे । रावणसेनान्तर्विचारशीलाय वा। **अदूताय** स्वामिने । यद्वा चतुर्थी तृतीयार्थे । दूतेन हनुमता प्रमृशाय । सीतां विचारचित्रे । प्रकृष्टं

हितं यस्येति **प्रहितस्तस्मै** च नमः । यद्वा दशरथेनास्मद्यज्ञसांगताकृतौ प्रेषिताय । अनेन सत्पुत्रेण पित्राज्ञाधर्त्रा भाव्यमिति नीतिः प्रदर्शिता भवति ॥ **इषुधिमते** तूणीरधारिणे । **निषङ्गिणे** खड्गवते । **तीक्ष्णेषवे** तीक्ष्णो रिपुकर्कशः इषुर्यस्य तस्मै नमः । **सुधन्वने** शोभनशार्ङ्कार्मुकवते च नमः । **आयुधिन** उक्तानुक्तायुधवते । नायुधेन माधवस्य कृत्यं तथाप्यनुकरणेन लोकानां धारणमायुधानामिति दर्शयति ॥ **स्वायुधायेति** ॥ स्वरूपभूतायुधवते । यद्वा आयुधिनं परं प्रति स्वायुधाय । श्रुतौ भवः प्रतिपाद्यत्वेनेति **श्रुत्यस्तस्मै** । 'वेदैश्च सर्वैरहमेववेद्यः' । 'वेदा ह्येवैनं वेदयन्ति,' [1]'श्रुतत्वाच्च' 'शास्त्रयोनित्वा'दित्यादि श्रुतिस्मृतिसूत्रेभ्यः। पथि सन्मार्गे प्रवर्तकत्वेन भवः **पथ्यः** । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन' इत्यादेः । इदानीमध्वनीन इतिवा पथ्यस्तस्मै नमः ॥ १ ॥

**काव्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च ॥ २ ॥**

सप्तमेनानुवाकेन हरिद्व्यापिहरिरूपाणि प्रकटयति । **प्राकट्यायेति** ॥ प्रकटानां प्रसिद्धानां समूहः प्राकटं तत्र भवः प्राकट्यः अतिप्रसिद्ध इति यावत्, तस्मै रामाय नमः । **नीप्यायान्यथाभावेन** गच्छन्त्यापो यतः स भागो नीपः तत्र भवः । क्षीरसमुद्रमध्यद्वीपा नीपस्तत्र विद्यमानाय नमः । न्युपसर्गपूर्वकत्वादाप आकारस्येकारः । यद्वा नयन्ति नियमयन्तीति नियः इन्द्रादयस्तान्पातीति नीपा ब्रह्माद्यास्तत्र नियामकत्वेन भवो नीप्यस्तस्मै । वनसंचरणकाले कचिन्नीपे तन्नामकवृक्षविशेषे भवो नीप्यस्तस्मै वा । तूलं च नीपप्रियकदंबाः । नीपोधूलिकदम्बोऽन्य इत्यमरः । पानीविषिभ्यः प इतिपः। बाहुलकगुणाभावे नीप इति भवति । सूदः सूदनं हिंसाकर्म तत्र भवः **सूद्यः** । मधुमुखाखिलरिपुमारणकर्मनिरताय च नमः । कृष्णपक्षे सूदः । सूपकृद्वेष-

---

1. ब्र.सू. १-१-११, १-१-३

भृद्धीमस्तत्र भवः तदवनकर्तृत्वेनेति ज्ञेयम् । स्वसेवकत्वेन तमर्हतीति वा । अन्नकाराः आन्धसिकाः सूदा इत्यमरः । सुरादीन्सूत इति सू रमा सीता तामुद्यातीति वा **सूद्यस्तस्मै** । सरस्सरसः सरसाः भक्तास्तत्रभवस्तस्मै च नमः । अथवा सरसाः रसेन श्रेष्ठेन सहिताः अधिकोऽस्तीतिमतिमन्त आस्तिका इति यावत् । तेषु पुरुषेषु पुरुषार्थप्रापकतया भवः । **सरस्यस्तस्मै** च नमः । रसः सारो वरः श्रेष्ठ इति वचनात् । वनसञ्चरणसमये क्वचित्सरसि सरोवरे भवायेति वा । पुराणपुरुषः पुराणप्रसिद्धो भवानित्याह । **नाद्यायेति** । न विद्यते आद्यः पूर्वजो यस्यासौ नाद्यस्तस्मै । नसमासो, न नञ्तत्पुरुषः । तेन ननु उभावदोषः । न विद्यते आद्य उपजीव्यो वा यस्येति नाद्यः । स्वयमेवोपजीव्योऽन्ये जीवा उपजीवका इति भावः । गिरौ भुविखेजले (विवरे) सर्वत्रापि रामाकारा अवलोकिता लोकैरित्येवमुक्तिः । नाद्यो नदानां शोणादीनामयमधिपतिरिति नादो यादोऽधिपः समुद्रस्तत्र भवो नाद्यस्तस्मै । तावत्पर्यन्तमर्यन्तकरूपाणि व्याप्तानीति भावः । अत्तुं भक्षयितुं न योग्य इति वा नाद्यः । रूक्षराक्षसाभक्ष्य इति यावत् तस्मै मोक्षदानाध्यक्षो भवानित्याह । **वैशन्तायेति ।** वि विशिष्टानि च तानि शं शानि च सुखानि तेषां समूहो वैशम् । सकल सुखात्मको मोक्षस्तं तनोतीति वैशन्तः तस्मै । वैशन्तः पल्वलं तत्र भवो वा तस्मै । कुं भूमिम् उत ऊर्ध्वभागं स्वर्गादिकमिति यावत् । पान्तीति **कूपा** रमाविधिभवेन्द्रादयस्तत्र नियामकत्वेन भवः कूप्यः तस्मै च नमः । लङ्कास्थकूपादावपि भवायेति वा । पुंस्येवांधुः प्रहिः कूपः । वेशन्तः पल्वलश्चाल्पसर इत्युभयत्र चामरः । अवटं (शकादित्वादन्) हृदय-गर्ते भवोऽ**वट्यस्तस्मै** । अतो गर्तसदमिति वक्ष्यति । गुहां प्रविष्टावात्मानौ हि तद्दर्शनादिति सूत्राच्च । गर्तावटौ भुविश्वभ्र इत्यमरः । आ सम्यक् लीलाबालः सन् वटे वटपत्रपुटे भव इत्यावट्यस्तस्मैं । इदानीमेव जटाजूटकरणसमये सम्यग्वटभवाय वावट्यः । प्लक्षोजटीपर्कटीस्यान्यग्रोधो बहुपाद्वट इत्यमरः । जटाकरणाय वटदुग्धग्रहणार्थं तद्वृक्षमूले विद्यमानायेति तात्पर्यम् । वक्तुं

योग्यः स साकल्येन न भवतीति वावत्यः । सम्यक् वक्तुं योग्यः श्लाघ्य इति यावत् तस्मै वा नमः । लङ्कागतगर्ते वर्तमानाय वा । तादृशेऽपि प्रदेशे नराशा ईशं ददृशुरिति भावः ॥ २ ॥

**नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय च तप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥ ३ ॥**

अखण्डखण्डेशतामाह । **वर्ष्या**येति । वर्षेषु न खण्डेषु नियामकत्वेन भवो वर्ष्यस्तस्मै । वर्षो द्वेषिबाणवर्षः तस्य योग्यो वर्ष्यः । स न भवतीत्य**वर्ष्य**स्तस्मै वा नमः । इदानीं वननिवासवत्वाद्वोदासीनो राज्य इत्यवर्ष्यः तस्मै वा । मेघं नैल्येनार्हति योऽसौ **मेघ्यः** । नीरदनील इति यावत् । भक्ताभीष्टसेचका मेघाः, [1]मेघवाहनादयस्तत्रोत्तमत्वेन भवाय वा । मिह्सेचने पुगन्तगुणे हस्य तादृशे घेच मेघ इति भवति । इदानीं मेघे मेघमण्डले भवाय वा । **विद्युत्याय** वेर्विष्णोर्द्युतिः कान्तिस्तामर्हतीति विद्युत्यस्तस्मै नमः । पदान्तत्वाभावाज्जश्त्वाभावः । तटिन्मण्डलवर्तिने वा । ईध्रानि स्वच्छजलदा अस्य वाहनत्वेन सन्तीति ईध्री इन्द्रस्तमर्हति सेवकत्वेनाग्रजत्वेन वेती**ध्रिय**स्तस्मै । शरदभ्रमण्डलगताय वा । ई. ई रमा तां घ्राति जिघ्रात्यास्वादयतीति यावत् । ईध्रियस्तस्मै । रमामुखाम्बुजचुम्बनवत इति भावः । **आतप्यः** चतुराननाद्यालोच्यस्तस्मै नमः । आतपप्रदेशे भवाय वा । आतपः सूर्यवंशस्तत्र भवाय वा । आतपे क्षत्रकुले भव आतप्यस्तस्मै । आतपः क्षत्रिये सूर्ये इति मेदिनी । वातं हनुमन्तं यातीति **वात्यस्तस्मै** । यद्यपि वातशब्दात्समूहार्थे यो विहितः पाशादिभ्यो य इति तथापि अर्हेत्यर्थे यत् अयमिति ज्ञेयम् । यद्वा वाति सूर्यावतारत्वात्सुग्रीवश्चेन्द्रावतारत्वादंगदो वातौ स्वार्हकत्वेनार्हतीति वात्यस्तस्मै वा । वातेर्नित् । वातिरादित्यसोमयो-रित्यभिधानात् । रिष्यन्ति नश्यन्ति द्विषन्तोऽस्मिन्निति रेष्मा युद्धभूमिस्तत्र

1. मेघवाहन इन्द्रः

भवो रेष्मियस्तस्मै । प्रलयकालवर्तिने वा व्युत्पत्तिरुक्तैवज्ञेया । वाससा पीतांबरेण तव्यः प्रकाश इति **वास्तव्यस्तस्मै**। यद्वा वास्तूनां ब्रह्मादीनां धर्माः वास्तवाः । सृष्ट्यादिकार्याणि तानर्हतीति वास्तव्यस्तस्मै । वास्तुं गृहभूमिं पाति रक्षतीति **वास्तुपस्तस्मै** वसेस्तुन्निति तुनि अगारे णिच्चेति णिच्यादि वृद्धौ वास्तुरिति ज्ञेयम् । वेश्मभूर्वास्तुर स्त्रियामित्यमरः । रावण-वेश्मभूमौ स्थितायेति यावत् । वस्तु स्वेतरजगत्पान्तीति रमादयः वस्तुपाः तेषामयं स्वामीति वास्तुपस्तस्मै वा नमः । नाद्यायेत्यत्र नदीभवायेति व्याकरोदपरः । तन्न तश्चचेमदकृत् । स्त्रीभ्यो ढगिति सामान्यतो ढकि वक्तुं शक्येऽपि यदादिकं निषेद्धुं पुनर्नद्यादिभ्यो ढगिति विशिष्य सूत्रकार उदाजहार ततश्च एयादेशे नादेयमिति भाव्यम् । नादेयं किमिदं जलं घटगतं नादेयमेवोत्पद्यत इत्यादेः । अस्मत्पक्षे तु नैषानुपपतिः । प्राकट्यायेत्यत्रापि कुत्सिततया टन्ति जलानीति कटस्तत्रभव इति । सवर्णदीर्घे प्राकाट्यमिति भाव्यमिति तत्तुच्छमिति दिक् ॥ ७ ॥

**इति श्रीमन्नवरत्नपुमुत्तमकृतायां शतरुद्रिययथार्थप्रकाशिन्यां श्रीमन्मध्व-समयप्रदर्शितमार्गानुवर्तिन्यां ललितपदमञ्जर्यां यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥**

**॥ श्रीमन्मध्वांतर्गत वेदव्यासात्मक श्री लक्ष्मीहयग्रीवार्पणमस्तु ॥**

॥ श्री लक्ष्मीनारायणाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुराजो विजयते ॥ श्री गुरुभ्यो नमः ॥

**नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शंगाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रे वधाय च दूरे वधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शंभवे च मयोऽभवे च ॥ १ ॥**

इदानींनाना वर्णान्प्रतिभटभीषकाकारानष्टमेनाचष्टे ॥ **नम** इति । **सोमाय** । उः उत्कृष्टा दुरिष्टास्पृष्टेति यावत् । मा रमा । उमा, सहितस्तया उमयेति सोमो रमारमणस्तस्मै । अनेन रावणहननानन्तरं पामरनरलोचनमनु समनुनीत जनकजनिरजनि श्रीजानिरिति द्योतयति । यद्वा सोम इव सोम आह्लादक-स्तस्मै नमः । रुद्रोदनं द्रावयतीति **रुद्रस्तस्मै** नमः । **ताम्रायाति** व्यक्तरक्त-रूपाय । **अरुणाय** अव्यक्तरक्तवर्णाय अमितम्योरिति (उ.सू. १७५) ताम्रेति ज्ञेयम् ॥ अव्यक्तरागस्त्वरुण इत्यमरः । शंसुखं गमयति वैरिभ्यो वियोजयति भक्तेभ्यः प्रापयति इति **शंगस्तस्मै** । यद्वा नामैकदेशे नामग्रहणं भीमो भीमसेन इत्यादिवत् । ताम्रादिसहपाठात् शंगः पिशंगः । पिङ्गलरूपस्तस्मै नमः। पिशंगौकद्रु-पिङ्गलावित्यमरः । **पशुपतये** व्याख्यातं प्राचि चैतत् । **उग्राय** भयङ्कराय उग्रं प्रति इति यावत् । **भीमाय** भीषकाय, भीमाय भीमं रिपुं प्रत्युग्रायेति वा । अग्रे परपराक्रमाविष्करणात्पूर्वमेव वधो यस्मात्सो**ऽग्रेवधः** । तस्मै । तव न वधः कदाचिदपीत्याह । **दूरेवधायेति** । दूरे वधः यस्य तस्मै । वधात्यंताभावं दूरेण (दूरशब्देन) आह **हन्त्रे** । अनितरसहायतया स्वयमेव वैरिमारकाय । त्वत्कृपया कृपयोप्युपायतोऽपायकृतो घ्नन्ति यांस्तेऽपि त्वयैव हता इत्याह । **हरिकेशेभ्य** इति । हरय एव हरिकास्तेषामीशाः हनुमदादयः तेभ्यः कर्तृभ्यः **वृक्षेभ्यः** करणेभ्यः **हनीयसे**ऽतिशयेनारीन् घातयित्रे । [1]'मयैवे ते निहताः पूर्वमेव

1. भ.गीता ११-३३

निमित्तमात्रं भव सव्यसाचिन्निति श्रीभगवदुक्तेः' । प्रत्ययार्थः अतिशयश्च कर्तृकरणत्वप्रदत्वरूपः । तत्रस्थित्वा तत्तच्छक्तिं प्रदाय नियामकः स्वयमेव तत्तत्करोति इति तात्पर्यम् । तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन् । एक एव महाविष्णुः कुरुते सर्वमंजसा ॥ परपक्षे वृक्षेभ्यो हरिकेशेभ्यो इति प्रकरणानानुगुण्यं ज्ञेयम् ॥ तारा वालिरमणी तस्या अयं **तारों**ऽगदः । पार्थ इत्यादिवत् संबन्धसामान्येऽण् । तस्मा अङ्गदाय ।**शंभवे** । शंसुखं भावयतीति स तस्मै नमो नमः । मयोऽसुरवर्धकिरुत्कृष्टो यया सा मयौः मण्डोदरी तस्या भव भवो मङ्गलं येन स रावणो **मयोभव्** तस्मै । प्रतरणः प्रतारको मारक इति यावत् । प्रतारणाय इत्युत्तरत्यस्यान्वयक्रमेणात्र व्याख्यानम् । तस्मै नमो नमः । ''अहल्या द्रौपदी सीता तारा मण्डोदरी तथा । पञ्चकन्या (ना) स्मरेन्नित्यं महापातक-नाशनमि''त्यादिप्रमाणप्रमितकन्यात्ववती मयपुत्रीति पितुर्मान्यता-प्रदा कन्येति भावः । स्मृतौरितिवन्मयौरित्योदन्तः शब्दः । परपक्षे भकारोकार-लोप आस्माके भवशब्दाकारलोपश्च छान्दसाविति समः समाधिः ॥ १ ॥

**नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नमः आतार्याय चालाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ॥ २ ॥ ॥ ८ ॥**

**शङ्कराय** रुद्राय । **मयस्कराय** सुखकराय । मयः शब्दः सुखपर्यायः । रामरामेतिजपपरायणाय स्थाणवे राघव उपास्य इति सुखकरतोचिता । परपक्षे शंकरमयोभूमयशस्करशब्दानां पौनरुक्त्यं स्फुटम् । सुखे तरतमभावकथनं त्वगतिकम् । **शिवाय** शेतेऽस्मिन् सर्वमिति शिवः । सर्वनिघृष्वरिष्वलष्व-शिवपद्वप्रव्हेष्वा अतन्त्र इति निपातनाच्छीङो ह्रस्वश्च शिवाय । **शिवतराय** शिवात् शिवतरोऽत्यन्तमङ्गलाय । शिवात्पवित्रादतिपवित्रतरायेति । यच्चरण-रजःकणसंगा गङ्गा गङ्गाधरं पुनाति पुनस्तस्य तदपेक्षया पावित्र्यमिति का

कथेति । [1]'यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत्' इति श्रीमद्भगवदुक्तेः । [2]'यत्पदे सपदि संगममात्रा ज्ह्राह्नवी हरशिरोमणिरासीदिति' रामायणाच्च । ''शिवेनमा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे । सर्वाँ᳝ अग्नीँ᳝ रप्सुषदो हुवेवो मयि वर्चो बलमोजो निधत्त । द्रुपदादिव मुंचतु । द्रुपदादिवेन्मुमूचानःस्विन्न स्नात्वीमलादिव । पूतः पवित्रेणैवाज्यमापः शुधन्तु मैनस' इति पवित्रेऽपि शिवशब्दप्रयोगात् । **तीर्थ्याय** । तीर्थे शास्त्रे भवस्तीर्थ्यः तस्मै शास्त्रप्रतिपाद्याय । तीर्थं शास्त्रेऽध्वरे क्षेत्र इत्यभिधानम् । यद्वेदानीं जनमनुसरत्तीर्थं गुरुमर्हति वसिष्ठं विश्वामित्रं सान्दीपिनं वा तीर्थ्यस्तस्मै नमो नमः । निदानागमयोस्तीर्थमृषिजुष्टे जले गुराविति थांतामरः । सेतुकरणात्पूर्वं कूले तीरे भवो मार्दवं दर्शयन्निति**कूल्यस्**तस्मै । कूलं रोधश्च तीरं चेत्यमरः । सेतुबन्धानन्तरं **पार्याय** पारे परपारेभवः पार्यस्तस्मै । पार्योऽभूत्तथापि परिपंथिनि वार्यश्चेत्किमकार्यकारिणेति तत्राह ।**अवार्यायेति** । वार्यो वैरिभिर्वारयितुं योग्यो नेत्यवार्यस्तस्मै । अत एवा**लाद्याय** अलाद्याय इत्युत्तरत्रत्यमन्वयक्रमेणात्र व्याख्यातम् । **रद्यो लद्यः** स एव रद्यः भेद्यः विदार्यो वा स न भवतीति तस्मै । रद विलेखने । विलेखनं भेदनं दारणं चेत्युक्तेः । शष्पं बालतृणमर्हतीति **शष्प्यः** । क्वचित्फेनमर्हतीति **फेन्यः** । फेनमीनाविति स्फायतेः फेन इति भवति । कुत्रचित्सिकतामर्हतीति **सिकत्यः** । अपरत्र प्रवाहमर्हतीति **प्रवाह्यः** समुद्रस्तस्मै । तं समुद्रम् आतार्याय तार्यम् अततीति आत् वायुः स्तस्यापत्य आतो मारुतिः । स आर्यो अर्यो वा ज्येष्ठः स्वामी वा यस्य स आतार्यः तस्मै तं कपिसमूहमुत्तरणायोत्तारकाय नमोनमः । प्राचिवीचीनिचयचनरांचमाननिरवधिनीरधिः जलधिः हरिणा हरिवाहिनीगतिहेतौ सेतौ कृते क्वचित्प्रवाहवान् कुत्रचिच्छष्पवान्परत्र सिकतावान् परत्र फेनवानिति निनीरप्रायो अभूदुदधिरितिभावः । परपक्षे माहात्म्यविशेषालाभः प्रकरणानौचित्यं च

1. श्रीमद् भागवत ३-२९-२२, 2. संग्रहरामायण २-१०-७

भवतः । कुंदः फेनस्तूपो सयूपकौ । शष्फं बालतृणं घासमिति सर्वत्र चामरः
॥ ८ ॥

**इति श्रीमन्नवरत्नपुमुत्तमकृतायां शतरुद्रिययथार्थप्रकाशिन्यां श्रीमन्मध्व-समयप्रदर्शितमार्गानुवर्तिन्यां ललितपदमञ्जर्यां यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके अष्टमोऽनुवाकः ॥ ८ ॥**

**॥ श्रीमन्मध्वांतर्गत वेदव्यासात्मक श्री लक्ष्मीहयग्रीवार्पणमस्तु ॥**

॥ श्री लक्ष्मीनारायणाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुराजो विजयते ॥ श्री गुरुभ्यो नमः ॥

**नम इरिण्याय च प्रपथ्याय च नमः किꣳसिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गव्हरेष्ठाय च नमो ह्रदय्याय च निवेष्प्याय च पाꣳसव्याय च रजस्याय च ॥ १ ॥ (नन्दिकाय च कूष्माण्डाय च नमः पराय च नमः पराय परन्तपाय च नमः परमात्मनाय च धूमाय च नमो हाराय च ताराय च नमो वामनाय च हरिण्याय च नमः शिवाय च हरिकेशाय च) ॥ २ ॥ नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नम आख्खिदते च पख्खिदते च नमो वःकिरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नमः आनिर्हतेभ्यो नम अमीवत्केभ्यः ॥ ३ ॥ ॥ ९ ॥**

**नम इरिण्याय च प्रपथ्याय च नमः किꣳसिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गव्हरेष्ठाय च नमो ह्रदय्याय च निवेष्प्याय च पाꣳसव्याय च रजस्याय च ॥ १ ॥**

नवमं नाना नवरूपाणि चाणिमादिमन्तीहानन्तान्यनन्तस्य रघूत्तंसस्य नमति । **नम इरिण्यायेति** । ई इत्याश्चर्ये ॥ इ अद्भुतो यो रणः संगरस्तत्र भवो हारिण्यस्तस्मै सर्वत्र गोत्रादौ गात्रानि रामस्य निकामं व्याप्तानि इति वाऽऽह इरिण्याय । ईरिणमूषरभूमिस्तत्रभव इरण्यस्तस्मै नमः । अर्तेः किदिच्चेति इनिन् इकारं चेरिणमितिज्ञेयम् । इरिणं शून्यमूषरमित्यमरः । प्रकर्षेण पथ्यः **प्रपथ्यो**ऽतिहितरूपस्तस्मै । महामार्गस्थाय वा । किं प्रश्नविपर्याभूतानि सिलानि सिराणि शिरांसि यस्य स **किंसिलस्तस्मै** ।

अनेकत्वात्प्रश्नविषयत्वं शिरसां संभवतीति भावः । शिरोवाची प्राचीरितः शिरशब्दः । किं पृच्छायां जुगुप्सन इत्यमरः । 'सहस्रशीर्षा पुरुष' इति श्रुतेः । [1]'अनेकवक्त्रनयनमनेकाद्भुतदर्शन'मिति भगवदुक्तेः । किं जिगुप्सितपिशिताशिकुलं प्रति शिलां प्रक्षेप्तुं यस्येति वा । अत एव **क्षयणाय** । रक्षःक्षयकराय । सर्वनिवासश्रीनिवासरूपाय वा । **कपर्दिने** । व्याख्यातमेतत् । पुलस्तये एकदेशविकृतन्यायेन वा वर्णागमविपर्ययन्यायेन वा पुलस्त्यकुले जातः पुलस्ती रावणस्तस्मै । तदर्थं गवि खे तिष्ठतीति गोष्ठः भावप्रधानो निर्देशः । ततश्च गोष्ठतां यातीति **गोष्ठ्यस्तस्मै** स्वार्थे यो वा । गोष्ठे खगदेवसमूहे भवो वा तस्मै नमो नमः । लङ्कायां गावो यत्र तिष्ठन्ति तत्र भवो वा । आकाशे गोशाले च चकाशिरे रामरूपाणीति भावः । अम्बांबगोभूमीत्यादिना स्थ सकारस्य षकारे ष्टुत्वेन गोष्ठ इति ज्ञेयम् । गोष्ठं गोस्थानमित्यमरः । गेहे भवाय **गेह्याय** रावणाय तदर्थम् । गृहेषु रावणादिगेहेषु भवो **गृह्यस्तस्मै** । गेहे क इति कर्तरिकः । तात्स्थाद्गृहा दाराः सीता तामर्हतीति वा गृह्यस्तस्मै । गृहंगेहोऽदवसितम् । दारेष्वपि गृहा इत्युभयतश्चामरः । **तल्प्याय** स्वतल्पं तल्पतां शय्यात्वमर्हतीति तल्प्यः लक्ष्मणस्तस्मै । शेषत्वात्तल्पत्वं युक्तम् । [2]'दशशतैर्युक्तो मुखांबोरुहैः । आसीच्छेश महाफणी मुसलभृत् दिव्याकृतिर्लाङ्गली पर्यङ्कत्वमवाप यो जलनिधौ विष्णोः शयानस्य चेति' श्रीमदुक्तेः । तल प्रतिष्ठाकरणे । चुरादिणिज्लोपः । स्वल्पेत्यादिनिपातात्तल्पमिति भवति । तल्पं शय्या च दारेष्वित्यभिधानम् । लक्ष्मणायाशीः प्रदायेति भावः । यद्वा तल्प्याय रावणादिकानगणय्य तल्पे भवाय वा । समुद्रतीरे दर्भरूपतल्पभवाय वा । **काट्याय** तृणविकृते कटे भवाय । वने तृणासनासीनायेति भावः । कमटंतीति काटाः सुखिनस्तत्र भवाय वा । सुखसाधनज्ञानवतोऽर्हतीति वा तस्मै । गव्हरे गुहायांतिष्ठन्तीति **गव्हरेष्ठा** ऋषयस्तानर्हतीति तथा । स्थेच

1. भ.गीता ११-१०, 2. म.भा.ता.नि. ९-५९

भाषायामिति लोक एवालुकूनिषेधो नतु वेद इत्यत्र सप्तम्यास्तत्पुरुषे कृतिबहुलमित्यलुक् । कृष्णोस्याखरेष्ठ इत्युदाहरणात् । छित्वरछत्वर इत्यादिनाष्वरच् । गाहतेः ह्रस्वोऽपि । गुहादम्भौगह्वरे द्वे इत्यमरः ॥ **हृदय्यो हृद्यस्तस्मै** । मनोहराय नमः । प्रियाय वा । सर्वस्मात्प्रेय इति श्रुतेः । **राक्षसवक्ष** उपरि भवाय, युद्धकाले तानधः पातयित्वोरसि स्वयं तिष्ठतीति भावः । हृदमगाधं जलं समुद्रमर्हति स्वार्हणायेति हृदय्यस्तस्मै वा । हृदं तमोगतगर्तं यापयति पापिन इति वा हृदय्यस्तस्मै । निवेष्टं नितरां वानरै रावणनगरीपरिवेष्टनं तत्र भवाय **निवेष्ट्याय** नमः अस्य षोवा निर्वचनत्वात्। यः पांसव्यः पांसून्धूलीः प्रक्षेप्तुमर्हतीति स **पांसव्यस्तस्मै** । कूष्मांडाय । तद्गणगराक्षसाय स्वयं **रजस्यः** प्रक्षेपणाय । रजोऽर्हतीति स तथा यत्प्रहरणा रणे वैरिणस्तत्प्रहरण एव रणधुरीण प्रतिभट इति रीतिरिति रणनिपुणो रेणुधारणोऽभूदिति भावः ॥ परपक्षे पुनर्वचनमनयोः पदयोर्ज्ञेयम् ॥ १ ॥

**नन्दिकाय च कूष्माण्डाय च नमः पराय च नमः परन्तपाय च नमः परमात्मनाय च धूमाय च नमो हाराय च ताराय च नमो वामनाय च हरिण्याय च नमः शिवाय च हरिकेशाय च ॥ २ ॥**

**नन्दिकाय** नन्दको नन्दतादिति चाशीः प्रदः नन्दक एव नन्दिकस्तस्मै । आशिषि चेति कर्तरि वुनि युवोरनाकावित्यकि नन्दक इति भवति । नन्दिकाय नन्दी आनन्दी स एव नन्दिकस्तस्मै । अथवा नन्दिको नन्दकः खड्गोऽस्या-स्तीत्यर्श आद्यचि नन्दकवते नमः । खड्गो नन्दक इत्यमरः । इति यथापदगति वान्वयः । भगवानेव राघव इति वासुदेवासाधारणलक्षणं वावक्ति । **कूष्माण्डायेति** । कु कुत्सितान्पापिन इति यावत् । अष्मयति तापयतीति कूष्मा । अण्डाज्जः खगो गरुड इति यावत् । अण्डशब्दादचित्तीति ठ भाव्यस्तथापि सम्बन्ध सामान्येऽणि भवत्याण्डमिति ज्ञेयम् । वैरितापकताक्ष्याध्यक्षायेति भावः । **पराय** सर्वोत्तमाय । परं वैरिणं

तापयतीति **परंतप**स्तस्मै द्विषत्परयोस्तापेरिति खच् खचि ह्रस्व इति ताकारह्रस्वे अरुर्द्विषदजन्तस्य मुमिति मुमि परंतप इति भवतीति ज्ञेयम् । परमं सर्वोत्तमं सर्वज्ञं महासंपदं वैरिरहितं वा भगवन्तं सदा गच्छन्ति मुक्ताविति परमातो भागवताः तैर्मन्यते ज्ञायते इति **परमात्मन**-स्तस्मै । भागवतैकज्ञेयाय नमः । यद्वा परमात्मवाची च परमात्मनशब्दः अकारांतः छांदसो ज्ञेयः । अथवा विवक्षावशात्परशब्दस्य नञुत्तरतोऽन्वयः । ततश्च नपरः निषेधोत्तरभवः समस्तानामसामर्थ्येनास्तानां समर्थत्वेनावशिष्टो हि न परः । स चासौ मात्मा रमास्वामी निस्स्वामी वा परमात्मनस्तस्मै । निषेधशेषो जयतादशेष इति भगवदुक्तेः । नेति नेतीति श्रुतेश्च । **धूमाय** च नमः । उना रुद्रेणैव मा सम्पद्येषांत उमाः दित्यपत्यानि । धुनोति कम्पयत्युमानिति धूमस्तस्मै । **हाराय** मुक्ताहारवते । वनमालिने वा । **ताराय** । संसारतारकाय ओंकारप्रतिपाद्याय वा । अत एव सुधा, तरंत्यनेनानिष्टनिचय-मित्योंकारस्तार इति । समुद्रोप्लवनवते वा । शुद्धाय वा । मुक्ताशुद्धौ च तारः स्यादित्यमरः । ताराय उत्प्लवनेनांधूकृतसिन्धवे हनुमते हारप्रदायेति वा । **वामनाय** अणीयोरूपिणे, अवामनाय महीयोरूपिणे वा । हरीणां कपीनां णो निर्वृतिरानन्दो यैस्ते हनुमत्सुग्रीवांगदास्तानर्हतीति **हरिण्य**स्तस्मै । हरति पापमिति हरिः । सःण्यः सुधासिंधुर्यस्येति हरिण्यस्तस्मै वा । **शिवाय** मङ्गलरूपिणे, शेते सर्वमस्मिन्जगदिदं यस्मिन् प्रलय इति शिवो वा तस्मै । **हरिकेशाय** हरिर्वायुः को ब्रह्मा च तयोरीशो हरिकेशस्तस्मै नमः । द्वंद्वेघीति हरिशब्दस्य पूर्वनिपातः ॥ २ ॥

**नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नम आख्खिदते च प्रख्खिदते च नमो वःकिरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नमः आनिर्हतेभ्यो नम अमीवत्केभ्यः ॥ ३ ॥**

शुष्कं गतनीरं नीरधिमर्हति प्रार्थनकर्मणीति **शुष्क्यस्तस्मै** । 'अब्धिः शोषं क्षणादुपगतो दनुजादिसत्त्वैः सिंधुः शिरस्यरहणं परिगृह्य रूपी' (म.भा.ता.नि. ८-१०) इत्यादि श्रीमदुक्तेः । यद्वा शुष्काः तपःकृशाः तानर्हतीति शुष्कयः तस्मै । शुषः क इति कः । **हरित्यः** सकलदिक्षु-भवस्तस्मै । एवं रीत्या **लोप्यो** राक्षसकुललोपे प्रवृत्तस्तस्मै । प्रलये सकल-लोपकाय वा । अनेन न त्रिनेत्रः संहर्तेति सूचितं भवति । उ रुद्रो लप्यो वाच्यो निंद्य इति यावत् । यस्मात्स **उलप्यस्तस्मै** । उलपाः कोमल-तृणादा-स्तत्रभवति संचारादिनेति उलप्यस्तस्मै वा । विटपविष्टपविशिपोलपाः इति कपन् । वलतेः संप्रसारणं चोलपमिति ज्ञेयम् । हंति हरिरस्मांस्तावका-स्तवस्तवनादिकमतो वयं न यवसाय मन्यामह इति महादेवं प्रति मन्दाक्ष-मन्दाः निन्दावादमुदाहरन् ॥ हरकिंकरा नक्तंचरा इति भावः । उर्व्यां भूमौ भव **उर्व्यः** पादचारीति यावत् । रामरूपेण धरिण्यामवतीर्ण इति वोर्व्यस्तस्मै नमः । **सूर्म्यायेति** सु अत्यन्तं शोभना वोर्मिरूर्मिकाङ्गुलीयकं तामर्हति सीतां प्रति प्रेषयितुम् । पुनर्जनकजनिदर्शनानन्तरं स्वयमङ्गुलौ धर्तुं वेति सूर्म्यस्तस्मै । पर्णानि पत्रतृणादीन्यास्ये येषां तान् पर्णिनो रिपूनर्हति त्यक्तुमिति **पर्ण्यः**, ये भयात्तृणं पर्णादि वा दशनैर्दशंति तानरीन् राजन्यान् । घ्नन्तीति समर्थपार्थिव-रीतिरनेन दर्शिता । पर्णाहाराः पर्णिनो मुनयस्तानर्हतीति वा पर्णानि पत्राणि शय्यार्थमर्हति वन इति वा । पर्णैः करणैः शं आतपनिवारणकारणकं सुखं ददतीति पर्णशदो द्रुमास्तानर्हति पर्ण्यः तस्मै, छायार्थं अटवीतटीकुटीर-करणादाविति **पर्णशद्यः** राक्षसशिक्षार्थे वा । **अपगुरमाणाय** उद्यतायुधायोद्य-तायुधं वैरिण**मभिघ्नते** संहर्त्रे नमः । उद्यतायुधाय संहर्त्रे च वा । गुरी उद्यमने । **आखिदते** स्वकुमाराक्षकुमारमारणानन्तरमीषत्खेदयुक्ताय नक्तंचर-वराय । प्रखिदते कुंभकर्णेन्द्रंजिन्मारणात्प्रकर्षेण खेदयित्रे नमः । अत भागवततनतानि भागवतान्यनेकान्येकयोक्त्या रूपाणि संगृण्हाति । **नमो व** इति । किरेति किलेति रावो येषामस्ति ते किरिणो वानरास्तेषां कं येभ्यो

रूपेभ्य; तेभ्यो **किरिकेभ्यो** नमः । संमोदात्सकिलकिला रवा इति रामायणवचनात् । वानरस्वभावभवोऽयं रव इति भावः । किरंति भक्ताभीष्टानिति किरिका इति गिरमितर उदाहरत् । तन्मन्दम् । इगुपधेत्यादिना के स्वार्थे च के किरका इति वक्तव्यत्वात् । **देवानां** सुराणां कार्यकर्तृत्वात्**हृदयेभ्यः** प्रियेभ्यः । देवकार्यार्थमेव देववरावतारो नान्यथेति कथयितुमभिधानं बहुधा देवानां हृदयेत्युक्तिरिति ज्ञेयम् । 'लीलयैव परानन्दः सुरकार्यार्थसिद्धये (म.१-३०) । रक्षोवधोऽशेषसुरप्रपालनं देवकार्यार्थमि' त्यादि वचनात् (म.भा.ता.नि.) । विक्षीणकेभ्यो । अक्षीणसुखेभ्यो वो नमः । अनन्तसौख्यादिगुणात्मकानि वीक्षेत वै तानि वपूंषि नाथेत्यादिवचनात् । विक्षीणा एव विक्षीणकाः कदापि क्षयरहितास्तेभ्यो वा । **विचिन्वन्तः** सीतामार्गणवन्तः कपयस्त एषां संतीति तथा तेभ्यो नमः । **आनिर्हतेभ्यः** आ सम्यक् हतं हतिः भावे क्तः निर्गता हतादिति निर्हता अमराः । आङा चानन्याधीनहतिराहित्यं द्योत्यते । अनन्याधीनव्याप्तिमन्त **आमीवत्का**स्तेभ्यो देवानां हृदयेभ्यो नमः । किरिकेभ्य इत्यादि पञ्चभिः पदैरपि पृथक् देवानां हृदयेभ्य इति पदपञ्चकान्वयो बोध्यः ॥ १० ॥

**द्रापेऽन्धसस्पते दरिद्रन्नीललोहित । एषां पुरुषाणामेषां पशूनां माभेर्मारोमो एषां किञ्चनाममत् ॥**

भावीनि भूतानि च नाणुमात्रं भिन्नानि गुणानुरूपाणि रूपाणि नत्वा अधुना धूतमधुना विश्वामित्रो मंत्ररूपेण दशमेन स्वाऽऽशासितमाशास्ते । **द्राप इति** । हे द्रापे द्रापयति कुत्सितमन्धंतमः प्रापयति पापिन इति द्रापिस्तस्य संबुद्धिः । **अंधसो**ऽस्मद्दत्तयज्ञीयान्नस्य **पते** अधीश । अदेर्नुमधौचेति नुमि धेसुटि चांधःशब्दोऽन्नवाची ज्ञेयः । सुट् छान्दसः । दरिद्रवदाचरतीति **दरिद्रन्** । इदानीं राजभवनं विना शुभवनं शुभावनायागत इति दरिद्रन्निति भावः । विरक्तेति यावत् । नीलं नीरं लाति राति ददातीति

नीललो मेघः । नीलल इव नीललः स्वेष्टाभीष्टसेचकत्वेन वर्णेन वेति नीललः । ओ रुद्रस्य हितं येन स उहितः । नीललश्चासावुहितश्चेति **नील-लोहितः** तत्संबुद्धिः । **एषाम्** अस्मदीयत्वेन त्वदवलोकितानां **पुरुषाणां** होत्रादीनां **तथैषां पशूनां** याज्ञियानामश्वानां गवां च **माभेः** मा रमा भि समीपे यस्य स माभिः । न विद्यतेऽभिः प्रतिपक्षी यस्येति वा माभिस्तस्य तव सकाशात् । समीपोऽभयतः शीघ्रसाकल्याभिमुखेऽभित इत्यमरः । **मारो** मारीचादिभ्यो मारणं मा मा च भूदिति शेषः । हे **अममत्** अमानज्ञान् । अमतान्वैरिण इति यावत् । मथ्नातीत्यममत् । अरिमथन राम । एषां निर्धारणे षष्ठी । एषां मदाशासितकार्याणां मध्ये किञ्चन किञ्चिदपि तव आश्चर्यकरम् उत्कृष्टं न । गाधिजाधिपरिहारो नागाधो भवत इति भावः । उ इति निपात आश्चर्यद्योतकः । निपात एकाजनाङिति प्रगृह्य संज्ञा । अत एकारे परे चावादेशाभावोऽवसेयः । इतरनवावतारात्मा रामात्मेति वाह ।**द्राप** इति । यथावतारक्रममन्वयक्रमो ज्ञेयः । हे नीललोहित । नीले नीरे रोहः प्रादुर्भावो येषां ते नीलरोहिणस्तेषां भावो नीलरोहिता, नीरे जले रोहिता यस्येति स तथा तत्संबुद्धिः । मत्स्य । तदात्मन् राम । गर्वेरत उच्च, रुहेश्च, रुहेरश्च लो वा, रोहितो मृगमत्स्ययोरित्यभिधानात् । नीरचरश्चासौ रोहितश्चेति तत्संबुद्धिर्वा, एवं रोहितपदं रक्तपरं ज्ञेयम् । मा न विद्यन्ते रोमाणि यस्य स मारोमा कूर्मः सोऽपि त्वम् । एषां पुरुषाणामिव एषां पशूनामिव च किञ्चन उत्तमांगं वराहसिंहयोरंगं नराणामिव ययोरवतारयो-र्येषाम् अश्वादीनां वेति तौ वराहनारसिंहौ वराहनरसिंहहयग्रीवा वा तदात्मन्, यद्यप्ययं न नवकान्तर्गतोऽर्ववदनस्तथापि पदात्प्राप्त इति चाधिको लाभः । अत एव रामायणे । 'वन्दे हयास्यम् । वन्देतनूस्ते वडवामुखादी'रिति । यद्यपि वराहादय इव मत्स्यकूर्मावपि नरपशुशरीरशिरसौ तथापि पदांतरेण तल्लाभादनेनानुक्तिरिति मंतव्यम् । दरिद्रन्निति भिक्षुकवेषभृद्वामनात्मन् । नीललोहितपदमावर्तते, ततश्च नीरं लोहितं रक्तमयं येनेति स तथा,

एकविंशतिवारं क्षत्रियान्हत्वा तदसृगाविलपरशुक्षालनेन रक्ततटिनीरकरोत्त-दात्मा त्वमिति भावः । हे परशुरामात्मक राम अंधस ऋषिमहिष्यर्पित-हविष्यान्नस्य पते । धराधररूपधरः सन्नंधसोऽन्नस्य भक्षणादिना पते कृष्ण ''द्विजपत्न्यर्पितमत्सि विभोऽन्नमित्या'दिवचनात् । ताः षड्विधान्नपरिपूर्ण-कराः समेताः, भुक्त्वाऽथ गोपसहितो भगवांस्तदन्नं रेमे, भूत्वातिविस्तृत-तनुर्बुभुजेबलिं स नानाविधान्नरसपानगुणैः सहैवेत्युभयत्रापि'' (म.भा. ता.नि. १३-६०,६१,६३) श्रीमदुक्तेः । मोहकोपदेशापदेशेन द्रापयति कुत्सितां गतिं प्रापयति जैनानिति द्रापिर्बुद्धस्तत्संबुद्धिः । द्रापयति कुत्सितबलादिकं बलिं गमयतीति द्रापिस्तत्सं बुद्धिः । वामन दरिद्र-न्निरंबरबुद्धो वा । अमानमतान् म्लेंछान् मथ्नातीत्यममत्। कल्किन् । एतन्नवात्मक राम । माभेः निशाचरान्मारीचादीन्हेतूकृत्यास्मान्माभेः मा भीषय । तानाततायिनो हत्वा मां निर्भयं कुर्विति प्रार्थयामासेति भावः ॥

**या ते रुद्र शिवा तनूः शिवा विश्वाह भेषजी । शिवा रुद्रस्य भेषजी तया नो मृड जीवसे ।**

स्वस्तुततनुमनूद्येप्सितानर्थयते, **या त** इति । हे **रुद्र** ते तव या पूर्वोक्ता **तनूः** । एकवचनेन सर्वासां तनूनामनूनज्ञानानंदघनत्वेन तादात्म्य-मभिप्रैति। कृषि चमितनीत्यादेरूः । **शिवेन** मंगलेन **आ** सम्यग्विद्यमानं **विश्वं** भागवतं जगत् । तस्य **अहं** न विद्यते हा अस्मिन्कर्मणीत्यहं यथातथा । निर्विषादं यथा भवति तथा । **भेषजी** भवरोगभंगेऽगदवदिति शिवाविश्वाहभेषजी भवौषधाच्छ्रोतृमनोभिरामादिति श्रीभगवदुक्तेः । न केवलं तव तनुः शिवा अपितु सौवानपि शिवान् करोतीति भावः । शिवेन शिवा शिवं सृगालतुलं विश्वा, विश्वं राक्षसकुलं आ सम्यक् हा आर्तिः शुग्वा यस्य तत् आह । आहं रचयितुं भेषजीवत्सनाभ्यादिमूलिकौषधवद्विद्यमाना वा । भियः षुग्घ्रस्वश्चेति षुक् । षिद्गौरादिभ्यश्चेति ङीप् । भेषजौषधभैषिज्येत्यमरः ।

ह्रस्वानंतरं गौणलघुपदत्वाद्वा गुणः । शेते सर्वं जगद्यासु इति शिवाः । शर्वर्यः । विश्वेति काकाक्षिन्यायेनोभयत्रान्वेति । ततश्च विश्वासु शिवासु विश्वेषु सर्वेष्वहस्सु च भेषजी । समग्रासु रात्रिषु समग्रेषु अहःसु च भेषजी नीरोगताकारिणी तव तनुरिति भावः । परपक्षे परः शिवाशब्दो व्यर्थः । किंचाहःस्वेव शिवानां रक्षकत्वमायातं न तु यामिन्यामित्यपूर्णता च । 'सायं त्रिधामा वतु माधवो मां, दोषे हृषीकेश उतार्ध रात्रे निशीथ एकोऽवतु पद्मनाभः' इत्यादि श्रीभगवदुक्ते रात्रावपि भगवान् रक्षयतीति ज्ञेयम् । साधारणतो निजभजकजनभेषजीतनुरित्युक्त्वाऽधुना चासाधारण्येनापि साधयति । **शिवारुद्रस्येति** । शिवा भवानी तया सहितो रुद्रः **शिवारुद्रः ।** उत्तरपदलोपी च समासः । तस्य स्वोपासकस्य सदाशिवस्य **भेषजी** हित-कारिणी भजकमनःसमाधानीयनिदर्शनदर्शनं वा । **तया** तादृश्या तन्वा नोऽस्मान् **मृड** । मृडय सुखय । यथानिःसारसंसारसरणं पुरो न भवेत्तथा मृडय मोक्षसुखं दिशेति यावत् । न हि महतां यत्नेन महतः प्रसाद्य विहिता चापेक्षा प्रेक्षावतां क्षयिष्णुसुखस्य यथेष्टदेष्टॄन् प्रतीयमुक्तिः । बंधकोऽपि न कोऽपि परः परमात्मनस्त्वत्तः इति तथा संबोधयति, **जीवस** इति । जीवान्प्रमादीन् सिनोति बध्नाति स्वशक्तिरूपोद्दामदाम्ना दामोदर इति जीवसिस्तत्संबुद्धिः । 'बंधको भवपाशेन भवपाशाच्च मोचक' इति वचनात् । परस्तु जीवस इति तुमर्थेसेसेनसेअसेन्कसेकसेनित्यादिना असेप्रत्ययमङ्गीकृत्य जीवयितुं मृडय सुखयेति व्याचख्यौ तल्लौकिकम् । सकलसाधनानां सुखानु-विधायित्वान्न सुखस्यान्यत्फलमुपलभ्यते लोके । तेन तु जीवयितुं जीवन-रूपफलार्थं सुखयेति सुखफलं जीवनमितीरितम् । तेन सुखकारणं जीवनं कार्यमिति जीवनापेक्षया सुखस्य पूर्ववृत्तित्वमभ्युपगतं स्यात् । ततश्च जीवनरूपकार्यं प्राक्कालिकसुखमिति कथं नानुभवविरोध इति दिक् ॥

**इमा॒ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम् । यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ।**

भवद्भिर्मां प्रति किं प्रतिक्रियते इत्यतः स्वतः पूर्णस्य नास्मत्तः प्रयोजनयोजनं तथापि श्रीमति मतिमात्रमतिमात्रं कुर्म इति वक्ति । हे **राम** दशास्यंदननंदन । प्रकृष्टा भा यस्य स तत्संबुद्धिः **प्रभ** प्रतिभटानामाहवपराभवभवशोभाभृत् इति यावत् । **कपर्दिने** जटाजूटवते । **रुद्राय** भवानीधवाय । **तवसे** बलप्रदाय ते । क्षयंतो नश्यंतो वीरा वैरिवीरा येन तस्मै **क्षयद्वीराय** ते तुभ्यम् । **इमामस्मदीयां मतिं** धियं **नो**ऽस्मान् जीवसे जीवयितुं विदध्न इति शेषः । त्वच्चिंतनपरं चेतः परे चेतः परं कुर्म इति भावः । **प्रभारामहे** त्वद्विषये प्रकर्षेण पोषयाम इति वा । **नः** अस्माकं **शं** सुखमसत् सत् विशीर्णं न भवतीत्य**सत्** । पूर्णमिति यावत् । षद्लृ विशरणेत्यादि धातुव्याख्यानात् । ततश्चासत् शं सम्पूर्णमोक्षसुखं यथा भवेत्तथा मतिं प्रभरामहे । शं मोक्षसुखं यथास्यात्तथेति वा । अस्मत्सुखं सद्दुःखव्याप्तमिति वदति **असद्विपदे ।** असतां तामसानां विपदे विपदर्थे । सम्पदादिभ्यः क्विबिति क्विप् । नो अस्मत्संबन्धिने **द्विपदे** मनुष्यमात्राय, **चतुष्पदे** गवादिचतुष्पदमात्राय च शं ददासि यथा तथा मतिं प्रभरामहे । न केवलमियतामेव किंत्वास्माकं ग्रामवासिनां सर्वेषामपीत्याह । **ग्राम** इति । **अस्मिन्** ग्रामे बहुजनावासस्थाने विद्यमानं **विश्वं** समस्तं वस्तु **पुष्टं** स्वस्वयोग्यतानतिरेकेण सुखादि पुष्टं **अनातुरं** नीरोगं रक्षःप्रहाराभावेनानातुरं वा यथा स्यात्तथा मतिमतितराम् प्रभरामहे इति भावः । नः अस्मिन्प्रत्यक्षसिद्धे ग्रामे समूहे ऋषिसंदोह इति यावत् । ग्रसेरा च (उ.सू.१४०) इत्कारे मनिति च ग्रामोति ज्ञेयम् । वृंदेऽपि ग्राम इति मांतामरः । विश्वं सर्वक्रत्वादिकं कर्म पुष्टं सांगं नातुरं आतुरा मारीचादि दुराचारातुरा होत्राद्यास्तै रहितं ययातांमतिं वा स्वस्थचित्त-होत्रादिसहितं सांगं सन्मंगलप्रदं च क्रत्वादिकं भवति यथा तमिति राम त्वयि प्रभरामह इति भावः । रुद्रायतवस इत्येकं वा पदं रुद्ररूप आयतो वसिरिव वसिः वस्त्रवदाच्छादको यस्य तत्सम्बुद्धिर्वा । रुद्रात्मकाच्छादकवन् । खनिकष्यिज्यसिवसिवनीत्यादिना इः । वसिर्वस्त्रमाच्छादकत्वात् । "त्वं च

रुद्र महाबाहो मोहशास्त्राणि कारय । अतथ्यानि वितथ्यानि दर्शयस्व महाभुज। प्रकाशं कुरु चात्मानमप्रकाशं च मां कुर्वित्यादेः'' । अयमर्थः सिद्धः ॥

**मृडानो रुद्रो तनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ ॥**

न केवलं देव त्वद्विषयशेमुषीमपितु नतिं च रचयाम इति चतुर्थ्या चर्चाह। **मृडेति** । **मृडश्चूडारद्वानयनेन** सुखकरः । **आनो**ऽनस्य मरुतोऽपत्यं मारुतिर्यस्य स **मृडानस्त्वं** उत अस्मत्प्रेक्षापरीक्षानन्तरं नोऽस्माकं **मयः** सुखं **कृधि** कुरु । व्यत्ययः छांदसः । **क्षयद्वीराय ते** भवते नमसा नमः । यद्वात्य-विचमितमिनमीत्यादिना नम्धातोरसच् । ततश्चांदसः सोराकारः । **नमसा** आनुकूल्यं **विधेम** कुर्मः । महन् महतो महान्भवानिति त्वन्नतिरुन्नतिप्रदेति वदति । यदिति । यद्यस्माद्धेतोः **मनुर्मननशीलः पिता** विधातापि । **योः** । ई च रमा सीता अः नारायणो रामश्च यौ तयोर्योर्भवतोः सकाशादेव शं सुखमश्नाति । यदि विधिरपि ते विधिकरस्तदा तत्वकानां मानवानामस्माकं का कथेति भावः । हे **रुद्र** द्विषद्रोदक तव त्वत्संबन्धिन्यां प्रणीतौ प्रकृष्टायां नीतौ दुष्टविनष्टिविशिष्टतुष्टिपुष्टिहेतौ नीत्यां न्यायमार्ग इति यावत् । सत्यां **तव** ते **प्रणीतौ** अस्मन्मखमुखानयने सतीति वा, वयं **आयजे**, तत्तद्देवताभागदाने जाते सति, आ सम्यग्देवपूजायां वा जातायां तत् उर्वरितं पुरोडाशादिकं **अश्याम**, भोक्ष्यामः । रुद्राणां क्रूराणां रक्षसां प्रणीतौ प्रकर्षेण तमःप्रापणे सतीति वा, परपक्षे मृडेत्याकारो निरर्थको ज्ञेयः ॥ ४ ॥

**मा नो महांतमुत मा नो अर्भकं मा न उक्षंतमुत मान उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मानस्तनुवो रुद्र रीरिषः ।**

पञ्चम्या नक्तंचरनिचयपञ्चतां रचयेति याचत इति वदति । **मान** इति ॥ नः अस्मदुपलक्षितसज्जनार्थं **अर्भकं** रावणपुत्रमिंद्रजितं उक्षेव वृषभ

इवाचरतीत्युक्षस्तमुद्धतं **मा मा वधीः** हनेति यावत् । मा वधीरिति छेदः । न माङ्योग इति निषेधादडागमस्यमा इत्यस्योत्तरत्रत्यस्य परेणमेत्यनेनान्वयः । ततश्च द्वौ नञौ इति न्यायान्नाशयेति लभ्यते । **उत** तद्धननानंतरम् । **उक्षितं** स्वककरनिकरतुहिनसलिलादिसिक्तं, कुम्भकर्णं इति यावत् । "तुहिनसलिलमाल्यैः सर्वतोऽभिप्रविष्टे रजनिचरवरेऽस्मिंस्तेन सिक्तः कपीश" इति श्रीमदुक्तेः (म.भा.ता.नि. ८-११६) । मा मा रीरिषः । नाशयेति यावत् रिष हिंसायाम् । **उत** तत्पतनसमनंतरं, **महांतं** ज्येष्ठं **पितरं** तदिंद्रजित्तातं रावणं मा, मा रीरिषः । नः नः इति पुरुवारवचनम् संरक्षणीयबहुत्वादुपपद्यते । संहार्याणां बहुत्वाद्वा। तेषां वधेन वः किमित्यतोऽस्मत्कुलकुशलं पलाशिवैकल्यमूलकमिति लपति । **तनुव** इति । **न** अस्मदादीनां तनुवः शरीराणि भवन्तीति शेषः । नो चेत्कदा क्रव्यादा भक्षयन्तीति भिया तदीयान्येव, तद्वधे कृते तु तदास्मदीयानीति जानीम इति भावः । मम किममतनिपातनेनेत्यतो भगवन् भवति भवतश्च मङ्गलदेवतामङ्गलाङ्गसंगोऽनुसरतः पामरानितीरयति ॥ **मेति** ॥ या **प्रिया** नियतभार्या **मा** लक्ष्मीः तां नश्च अस्मदादिसर्वजगतां **मातरं** प्रसवित्रीं **अव** रक्षःसंक्षयानंतरं तां सहासनशयनादिभी रक्षय । पूर्वं मतिं प्रभरामह इत्युक्तम् । तया किं फलं लभ्यत इत्यतः सैव संपत्प्राप्तिकेत्याह ॥ **धीरिति** ॥ धीःत्वद्विषयिणी शेमुषी मा संपद्रूपिणीति आवश्यकी मतेर्भवत्परता कृतिरिति भावः । मातरं सीतामुत **आनः** अनयेः चेष्टयसीति वा । दुर्भूतभीत्या प्रादुर्भूतां निजाव्याजकलां कैलासादागमनात्पुरा सीतां निश्चेष्टां स्वाभीष्टास्या चेष्टयसीति भावः । 'रूपांतरेण कैलासं गता नित्यावियोगिनी'त्यादि वचनात् (म.२-२) । दुरात्मकृतदुष्कृतिदूना इति दीनास्तदानीं जनाः सौवं देव सर्वमवेति सर्वेऽपि सर्वेश्वरं वदंतीति वक्ति । **मान** इति । नोऽस्माकं महांतं पूर्वजं मा वधीर्मा हन, दितिसुतगतो भवानेव हंति, न हि संति विना विना विनाशशक्तयस्तेषामिति तद्धननमपि तावकमेवेति त्वं मावधीरितीरितमिति

भावः । 'मयैवेते निहताः पूर्वमेवे'ति गीतं गीतायां भगवता । नोऽस्माक-मर्भकं सद्यो जातं पोतम् । अर्भक पृथुक पाकावयसि । ऋधुवृद्धौ अतोवुन् भकारश्चांतादेशो गुणे अकाशादेशे चार्भक इति ज्ञेयम् । मावधीः । उतानंतरं उक्षंतं वर्तमानकालिकरेतःसेकं कुर्वंतं नूतनतरुणं च मावधीः । उक्षितं कलिलबुद्बुदाद्याकारवन्तं चमा रीरिषः । नः पितरं मातरं च मा शरीरिषः । हे रुद्र नः प्रियाः प्रीतिविषयाः तनुवः स्वे रीराणि च मा रीरिषः । रघूत्तम न तमः पातयसि चेत् नक्तंचरान् तर्हि सन्मात्रगात्र गोत्रादिकं गोत्रायां न तिष्ठतीति शिष्टष्ट तानेतत्क्षण एव क्षपयेति विज्ञापयामासुरिति हृदयम् । विश्वामित्रः स्वकरक्षणं प्रार्थयत इति वा ॥

**मानस्तोके तनये मान आयुषि मानो गोषु मा नो अश्वेषु रीरिषः ।**
**वीरान्मानो रुद्र भामितो वधीर्हविष्मंतो नमसा विधेमते ॥**

विश्वामित्रः स्वामित्रं मारीचं संचिंत्य षष्ट्या चर्चा रामपराक्रमं स्पष्टयन्भीषयति भाषते च । **मान** इति । हे **रुद्र** क्रूर मारीच **नः तोके** अस्मदपत्यमात्रे **तनय** इव तव यो हि शिष्यादिस्तद्विषये **मारीरिषः** हिंसां मा कुरु तथा **नः आयुष्यायुर्विषये** च **माने** मानविषये चेति वा मानहानिं मा कुर्विति यावत् । नः **गोषु** यज्ञोपयुक्तासु तथा**श्वेष्व**श्वमेधसाधनेषु मा रीरिषः । तोकादिविषये इतः परं मारीच मारको न भव । का भीरभीतस्य म इत्यतस्ते शास्ता रामोऽस्तीत्याह । **भामित** इति । यो भया, वैरिपराभवनभवशोभया अमितोऽपरिमितः । अपरिमितकांतिरिति यावत् । शङ्करः शङ्करो ममास्ती-त्यतो वाह । **रुद्रभामित** इति । रुद्रादपि भा अमिता यस्य स रुद्रभामितः । आहिताग्न्यादित्वान्निष्ठा परनिपातः उपलक्षणमिदं । रुद्रभामितः भयामितः परिमितः भामितः स चासौ रुद्रश्च रुद्रभामितः पूर्ववत्परनिपातः । रुद्रस्तु भामितः परिमितप्रकाशः भगवांस्तु रुद्रभामितः रुद्रादपि भया अमितः अपरिमितप्रकाशः । रुद्रः भामितः परिमितप्रकाशः येनेति वा रुद्रभा अपि

भगवत्प्रभावभवेति शंकरशंकरतानुसंधानमकिंचित्करम् इति भावः । यद्वा रुद्रभामिता उ-वधीरिति छेदः । रुद्रभामिता उ अनुमितैव । हंत वा उ इत्यादिवत् उः एवार्थः । अतो नात्र परनिपातभीतिः ॥ आनुष्ठितश्चानेनारि-परिभव इत्याह । **अवधीः** अहन् । मध्यमपुरुष व्यत्ययेनाधमपुरुषाणां भवतां क्वावकाश इति व्यञ्जयति, भगवतो भवतश्च कोऽनुबन्धो येन सानुबंधानस्मान् स मारयेदित्यत आह । **हविष्मंत** इति । वयं हरिष्मन्तः याज्ञिय-हविरादिकमुपायनत्वेनोपादाय च हविष्मन्तः संतः **ते** त्वदर्थं त्वन्मारणार्थं इति यावत् । **नमसा** नमश्च **विधेम** कुर्मः । ततश्च नमस्कारेण हविषा च तुष्टो रामस्तामससूदनं करोति इति भावः । रामं प्रति वा वक्तिः । **मेति** । नः तनये पुत्रविषये तथा गोषु अश्वेषु आयुषि आयुरर्थं मा रीरिषः । निमित्तात्कर्मयोग इत्यनेन 'चर्मणि द्वीपिनं हंति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हंति स्मीग्रिपुष्कलको हत' इतिवत् । आयुषीति चतुर्थ्यर्थे सप्तमी । अस्मज्जीवनार्थमेतान्मामकान् रक्षयेति जीवनस्य तदवनाविनाभूतत्वात्कर्मयोगो ज्ञेयः । राक्षसाः कुतो भवतो नाशयेयुरित्यत ईश त्वत्कृतानर्थेनैवेत्याह । **नस्त** इति । नस्त इति पञ्चम्यर्थे तसिः । नासिकानिमित्तं यदकं दुःखं तस्मिन् सति शूर्पणख्या नासिकाकर्णछेदः कारितः इति दुःखे सति कुतो न हिंसां कुर्युरिति भावः । ''ध्वस्तकर्णां विघोणां च कारयामास राक्षसीम् । लंकेशभगिनीं रामो लक्ष्मणेनानुजन्मनेति'' मणिमञ्जर्युक्तेः । 'तां तत्र हास्यकथया जनकेत्यारभ्य तैनैव दुष्टचरितां हि विकर्णनासां चक्रे समस्तर-जनीचरनाशहेतो'रिति श्रीमदुक्तेश्च (म.भा.ता.नि. ५-२६) । श्रुतौ तु कर्णानुक्तिरमुख्यत्वात्तयोर्ज्ञेया । यद्वा अहं नित्यश्रुतत्वयोगेन श्रुतिशब्दवाच्या स तु श्रुतिशब्दवाच्यो मुधेति क्रुधानाभ्यधादिति वा । अतः मावीरान् त्वत्पुरतोऽति दुर्बलांस्तान् राक्षसान् भामितः त्वं नोऽस्मदर्थे अरुद्र राम तानवधीरेवेति निश्चयोऽस्माकमितीत्थमुक्तिः । **कः** तव सेवका इति

विज्ञापयति । **हविष्मन्त** इति । वयं हविष्मन्तः संतः ते नमसा नमस्कारं च विधेम कुर्मः । वीरा सद्वीरान्वा नरान् वानरान्वा मावधीरिति वा ।।

**आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु । रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः ।।**

सप्तम्या दुरितभरितदूरवर्ती भवान् तच्छिक्षको रक्षकश्च सतामिति वदति ।। **आरात्त** इति ।। **गोघ्ने** गा घ्नंतीति गोघ्नास्तेषु तथा **पूरुषघ्नेषु** रक्षःसु राक्षसा अमनुष्या एवेति हंतेरमनुष्यकर्तृके चेति ठक् । यद्वा प्रलंबघ्नः शत्रुघ्नः कृतघ्न इत्यादिवन्मूलविभुजादित्वाद्वा ठगिति ज्ञेयम् । दाशगोघ्नौ संप्रदान इति निर्देशाद्वा । **ते** बहुवचनमाद्यर्थे । त्वं तावकाश्च**आरात्** दूर एव । का कथा तेषां हितकृतो नेतीति । **क्षयद्वीराय** क्षयद्वीरस्य **ते** तव **अस्मे** अस्मद्विषये उतानंतरं **सुम्नं** सौमनस्यं अस्तु । ते तव सकाशात्सुम्नं सुखं वास्तु । क्या छंदसि । देवान् जिगाति सुम्नयुरिति श्रुतेः । ते त्वया **नः रक्षा** च कार्येति शेषः । नः प्रतिवः प्रतिपक्षिणः क्षिणोमि क्षणत इति भणेति भणति ।। **देवेति ।।** देव रघुदेव नः प्रति **अधि ब्रूहि** च । अधिना न मनःसमाधानार्थं किं पुनः मनोरथसिद्धिर्यथा स्यात्तथेति प्रयोजनावधिकत्वं वचनस्य द्योतयति । **अथा**नन्तरं रक्षःक्षयरूपमंगलरूपं वा ।। कृत्स्नम् **शर्म** सुखं । आनन्द-शर्मशान्तेत्यमरः । **आयच्छ** सम्यग्दिश । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः । भवन्त एव परवीरान्ध्नंत्वित्यतो विप्रकर्म तन्न भवति, भवत्कर्मैवेत्याह । **द्विबर्हा** इति । वयं द्वि अस्मज्जातिद्वितीयैः क्षत्रियैरिति यावत् । बर्हो वृद्धिर्येषांते तथा विप्रा इति यावत् । अस्माकं तु यजनयाजन-पठनपाठनादिकमेव योग्यं नाहवः शोभनावह इति भावः । 'परधर्मो भयावह इति भगवदुक्तेः ।। दृहदृहिबृहबृहि वृद्धाविति बृहधातोर्बर्हेति वर्धंत इति बर्हा इति ज्ञेयम् । ब्रह्मक्षत्रियविट्शूद्रेति प्रथमवर्णो विप्रः द्वितीयः क्षत्रिय एवेतीयमुक्तिः ।।

**स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्निवपंतु सेनाः ॥**

विश्वामित्रः स्वात्मानं प्रति सज्जनं वा वक्तीत्यष्टम्याचष्टे । **स्तुहीति** । हे ममात्मन् हे सज्जन तं पूर्वोक्तं **श्रुतं** प्रसिद्धम् । **गर्तसदं** हृदयगुहानिहितं हसिमृग्रित्यादिना गृधातोस्तनि गर्तमिति ज्ञेयम् । षदल् विशरण गत्यवसादनेष्वित्यतः क्विपि सीदतीति सत् सदमिति द्वितीयैकवचनम् । **युवानं** निरंतरतरुणम् । 'न जरा नापि निष्यंदो न मलं विमलात्मनो' रितिवचनात् । यौतीति युवा । कनिन्युवृषितक्षिराजीत्यादिना कनिनि युवेति ज्ञेयम् । **मृगं** मृगाक्षीं मृगयन्तम् । संवीक्षयंतं वा । संवीक्षणं विचयनं मार्गणं मृगणा मृग इत्यमरः । **उग्रं** रावणादिरक्षःकुलं हंतुं संहर्तुमेव **भीमं** भयंकराकारवहम् । घोरं भीमं, रौद्रं तूग्रमिति उभयतश्चामरः । वस्तुतस्तु **नभीम**मित्यर्थः । शान्ततमं रामं स्तुहि । ष्टुञ् स्तुतौ लोट्, लोटः सेर्ह्यपिच्चेति हिः । तत्स्तवनमेव तवावनकरमिति वदति । **स्तवान** इति । **सेनाः** रक्षःसैन्यानि **अस्म**दस्मत्तः अस्माकं वा **अन्यं** भिन्नं जनं वैरिणं वा आवपन्तु, बाणानिति शेषः । किंतु इति स्तवानः त्वं सेनाः देव हे रुद्र राम ते सेनाः अस्माकं अन्यं रिपुं आवपन्तु इति स्तवानः संस्तवानस्त्वं, यद्यपि सम्यानच्स्तुव इति संपूर्वकादेव ष्टुञोर्विधानमानचः । तथापि केवलादेवानच ज्ञेयः । परस्तु स्तूयमान इति व्याख्यातवान् । कर्तर्येवायमानच् न कर्मणीत्युपेक्षणीयः । तथैव कौमुद्यां । संस्तवानो वाग्मीति । जीर्यतीति जरत् । तदेव जरित्रं जीर्यतेरतृन् इति जरन्निति भवति तन्न भवतीत्य**जरित्र** कदाप्यजीर्णमौक्तगात्रमिति यावत् । तादृशे शरीरे त्वं **मृड** सुखमनुभव । रामस्तवानस्य साक्षान्मोक्षेऽक्षीणानन्दानुभवः फलं रक्षःक्षयस्त्वान्तरालिकं इति सुसाधो विरोधिवध इति त्वमवश्यं रामं स्तुहीत्युवाचेति तात्पर्यम् ।

यद्वा सीताधाताया यातुधानीः समाधानीकुर्वत्यास्त्रिजटायाः स्वप्ने दशाननानाशदर्शनं निदर्शयति । **स्तुहि श्रुतमिति** । हे रक्षस्त्रीकुलं श्रुतं दशरथापत्यं प्रसिद्धं युवानमुग्रं रावणं हन्तुं तं भीमं मृगं रामं स्तुहि । रावणं किं भूतं पश्यसीत्यतो वक्ति गर्तसदमिति गर्ते गोमयह्रदे सीदतीति तथा तमपश्यमिति शेषः । अन्यं रावणप्रेर्यं कुम्भकर्णेन्द्रजिदादिकं च गर्तसदं न भीमं विभीषणं नञन्वितभीमपदस्य विभीषणपदस्य चानतिभिन्नार्थत्वात् भियः षुग्वा यस्माद्भीः स भीमः भीमादयोऽपादान इति सूत्रात् । भीषयतीति भीषणः । कर्तरि ल्युः । न भीषणो हि विभीषण इति तत्सहजम् । शुद्धबुद्धित्वात्तदन्यं विभीषणं स्तवानः राम तव सेनाः मृडाजरित्रे रुद्रवरादिनाऽवध्ये रावणे वपंतु क्षतिभृतः प्रक्षिपंत्विति स्तवानो यस्तं वापश्यं ततो रामं स्तुहीत्यवददिति भावः । 'तत्रैव त्रिजटानामा शुद्धभावा निशाचरीत्यारभ्य प्रविष्टो गोमयह्रदं, गोमयह्रदगा सर्वे लंकेयं भस्मसादभूत् । श्वेतातपत्रः श्वेताद्रावेक आस्ते विभीषण' इत्यंतेन रामायणवचनेनायमर्थः सिद्धः । शतकोटिरामायणार्थस्याप्यनेन सामूल्यमिति न कथानुपूर्व्येण कथितेति न परस्परासङ्गतिरित्यौत्तराधर्यादिकं वा शंकनीयम्॥

**परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतिरघायोः । अव स्थिरा मघवद्भ्यःस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय ॥**

नवम्याऽनवम मामका नवा तावका एव त इति कथयति, **परीति नो** अस्मान् यो **दुर्मतिः** जगन्मङ्गलभंगदपरनारीमात्ररतिः किमुत जगदुदार-दारसुरतरतिमतिकृतिरिति रतिपतिशरहतिपरवशतया दुर्धिषणो विभीषणाग्रजो रावणः । **रुद्रस्य** भयंकरस्य तस्य या **हेतिः** रुद्रस्य रुद्रसंबंधिनी रावणाय दत्ता हेतिरिति वा । अत एव**घायोः** अघेन पापेनैव नीयते येन आयुरित्यघायुः पापसंपादकजीवितकालस्येत्यर्थः । आयुर्जीवितकालो ना । वृजिनैनोऽघं इत्युभयतश्चामरः । केचित्तु छंदसीण(उ.सू.२) तत उणि । एति

गच्छति इत्यायुः मा न आयाविति वैदिकनिघण्टुः प्रथममायव इति मंत्रः । छंदसीण इति बहुलवचनात् भाषायामपीति । पुंल्लिंग आयुशब्द उकारान्तो ज्ञेयः एतेर्णिच्च (उ.सू.२७५) इत्यसुन्प्रत्यये षंकारांतो नपुंसकलिंगः । प्रयोगास्तु 'आयुष्येवेन्द्रिये । जटायुषा । समाप्तिर्यदि नायुषः स्यात्' इति श्रुति-रामायणनैषधाधिषु बहवः संतीति । वस्तुतस्तु आङ्पूर्वक अघधातोः मृगय्वादित्वात्कौ (उ.सू. ३७) आयुर्वाच्यायुशब्दो बोध्यः । विस्तरस्तु तत्त्वबोधिन्यां बोध्य इति दिक् ॥ 'अघायुरिंद्रियारामो मोघं पार्थ स जीवतीति निंदनादघायुष्ट्वस्य भगवता । आ अत्यंतं ईषा हिंसा येन नः इत्येषस्तस्य तु तस्यै वा **नः** अस्मदीयाश्च **परि** परितः **परिवृणक्तु** । वर्जयतु । स्वबाधाविषयान्मा करोतु । **मघवद्भ्यः** इंद्रादिदेवेभ्यः **मीढ्व** अभीष्टसेचक । श्वन्नुक्षन्निति निपातनान्मह पूजायामिति धातोर्हस्य घे अनुगागमेच मधवेति भवति । इंद्रो मरुत्वान्मधवेत्यमरः । त्वं नः **अव** । एवं प्रकारेण **परित्वेषस्येति** रामविशेषणं वा । कान्तिसंपन्नस्य ते **स्थिरा** या दृढाहेतिरा-वर्तयति, शरः तां रावणस्य **तोकाय तनुष्व** विस्तारय तं प्रतिक्षिप । उपलक्षणया रावणसंबंधिमात्रं प्रति प्रतिक्षिप । नोऽस्माकं तनयाय पुत्रछात्रसगोत्रजनाय **मृडय** सुखं देहि । ततश्च चतुर्थी संभवतीति भावः । पलाशिकुलकालो भव फलमूलाशिकुलकुशलकृद्भवेति भावः । परिण इत्यसमानपदेऽपि णो वैदिकः । नच यत्तच्छब्दाध्याहार दोषः । महार्थप्राप्तौ तस्याकिंचित्करत्वात् । तथाहि । परेणाप्यनादृतो नैव स दोषः । या दुर्मतिस्त्वय्यस्ति तां मधवद्भ्यो यजमानेभ्यः सकाशादवतनुष्वेति व्याकुर्वता या दुर्मतिस्त्वयीति व्याकुर्वन्दुर्मतिरेवेत्युपेक्ष्यः प्रेक्षावद्भिः ॥

**मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥**

दशम्या च सत्सु सम्यक् सौमनस्योपेतोऽपेतनीतीन्संहरन् हर आगच्छेति वदति । **मीढुष्टमेति** । इष्टाभीष्टवर्षकोत्कर्ष **शिवतम** अतिमंगलमूर्ते **नः शिवः**

मंगलरूपो भव। नकेवलं नः, यः **सुमना** देवत्वजात्यवछिन्नस्तस्यापि शिवो भव। देवा अपि रावणोपद्रुता इति तानपि सुखयैतन्नाशेन श्रीशेतिभावः। न सामर्थ्यं मानवस्य दानवहानौ ममेत्यतो वाह। **सुमना** इति। यः सुमनाः देवस्त्वमिति तद्धतिकृतिकृदितीति बोधयति। यदाश्रया असुराः अस्रपाः सदा स दासः कृत्तिवासास्तवेति स्तौति॥ **कृत्तिंमिति**॥ यः **कृत्तिं** चर्म **वसानः** परिदधानः कृत्तिवासाः। ताच्छील्यवयोवचनशक्तिषु इति चानश् इति वसधातोश्चानश्। कृत्तिवासाः चर्मधारणशीलः। **पिनाकं** तन्नामककार्मुकं वा शूलं वा **बिभ्रत्** दधत्। नाभ्यस्तादिति न नुम्। अजिनं चर्म कृत्तिस्त्री, पिनाकं स्याच्छूल शङ्करधन्वनोरित्युभयतश्चामरः। तस्य **परमे** चरमरूपे शेषात्मक इति यावत्। तदेवाह **वृक्ष** इति। वृक्षवान्वृक्षमस्मिन्केतुभूततालवति लक्ष्मणे **आयुधम्**। ग्रामान्निर्याणक्षणे लक्ष्मण एव स्कंध आयुधं दधदनुयात इति कथानुसंधेया। अत एव संग्रहरामायणे, ''ये राज्ञे वरुणपते धनुषी ते समानय। अभेद्यं कवचं हृद्यमक्षयेषु तथेषुधी। खड्गंचानय विन्यस्तं सर्वमाचार्यसद्मनि। इत्युक्तमात्रः सौमित्रिः स्वमापृच्छत्सुहृज्जनम्। आचार्य-सद्मनो हेती हैमदीत्याः समानयदिति।'' तत् यदायुधजातं लक्ष्मणे निधाय **आचर** आचरः संचारमकार्षीस्तद्बिभ्रदेव आगहि आगच्छ। रुद्रस्य शेषात्मकत्वेनैव च स्थानं मुक्ताविति संभावितेयमुक्तिः। अत एव 'रुद्रः शेषात्मक' इति श्रीमदुक्तिः। परमे स्थूले वृक्षे वृक्षेषु आयुधमिति भावप्रधानो निर्देशः। आयुधतां निधाय। कपीनां न कार्मुकादिना कृत्यमपितु वृक्षा एव रक्षोवधआयुधरूपास्तेषामिति भावः। पिनाकं बिभ्रत्सीताविवाहवेलाया-मितराशक्यारोपमपि चापं दधत्। कृत्तिं व्यासरूपेणैणं चर्मवसानः प्रलये ब्रह्मचर्मवसानो वा त्वमागच्छ सर्वसंहर्तुरिदं न दुःसाधमिति भावः। चर्मचैणं वसानः। ब्रह्मचर्म शिरः पट्टीदिक्पालोर्ध्वगभूषण इत्यादिवचनात्। न देव तवागमनमेव केवलमनोरथपूरकमपि तु तुच्छयातुधानघातोऽपि आयातेन कार्य इति वाह। **आचरेति**। अर्णवमध्यवर्तिनो भक्षय राक्षसानित्युत्तर-

त्रत्यस्याध्याहारेणान्वयः । अत एव **विकिरत्** । विकिरन् बाणानिति शेषः । अविवद्रविवल्लोहित रक्तवर्ण द्वेषिप्रदर्शितरुषा रक्तवर्णेति प्रभाकृत्प्रभः प्रभुरिति भावः । विशिष्टं लोहितं क्षतजं यस्य स विलोहितः स न भवतीत्य**विलोहितस्**तत्संबुद्धिर्वा । यदा शरशरासनपाणी सन् सरणरणिको रणमनुसरति तदनु दनुजा मनुजाधिपाः द्रुतविद्रुता एव भवन्तीति दूरोत्सारिताडनक्षतिजातारिति सृगाविलात्वमिति तात्पर्यम् । हे **भगवस्ते नमोऽस्तु** भूयोभूयोऽपि इयानेव विशेषोऽस्मत्तोषकोऽस्मत्तो भावीति भावं प्रकटयति पुनः पुनर्नमनेन । यत्पिनाकं बिभ्रच्छूलं दधदिति दुर्गा ग्राह्या । ततश्च तदात्मिकां कृत्तिं चर्म वसान आच्छादकत्वेन दधानः परैः शरैः शरीरं शीर्णं न भवेत्तथा व्यवधानार्थं चर्म शीतचन्द्रांकं लौकिकन्याससंरक्षणाय रामो दधारेति भावः । 'दुर्गात्मिकात्सैव च चर्मनाम्नीति' श्रीमदुक्तेरिति वा । (म.भा.ता.नि. ३-७७)

**विकिरिदविलोहित नमस्ते अस्तु भगवः । यास्ते सहस्र॑ँ हेतयोऽन्य-मस्मन्निवपंतु ताः । सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि । सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम् । तेषा॑ँसहस्रयोजनेऽव धन्वानि तन्मसि । अस्मिन्महत्यर्णवेंऽतरिक्षे भवा अधि । नीलग्रीवाः सितिकंठाः शर्वाः अधः क्षमाचराः । नीलग्रीवाः सितिकंठाः दिव॑ँरुद्रा उपश्रिताः । ये वृक्षेषु सस्पिंजरा नीलग्रीवा विलोहिताः । ये भूतानामधिपतयो विशिखासः कपर्दिनः । येऽन्नेषु विविध्यंति पात्रेषु पिबतो जनान् । ये पथां पथि रक्षय ऐलबृदायव्युधः । ये तीर्थानि प्रचरंति सृकावंतो निषंगिणः । (ये वनान्युपसर्पंति ते व्युष्टि-रुद्रायते । ये ग्राम्यामुपसर्पति तेभ्यो व्यष्टिमुपासते ।) य एतावंतश्च भूया॑ँ सश्च दिशो रुद्रा वितस्थिरे । तेषा॑ँ सहस्रयोजनेऽव धन्वानि तन्मसि।**

''विकिरिद विलोहित नमस्ते अस्तु भगवः इत्यारभ्यास्मिन्महत्यर्णव'' इति पर्यन्तं खिलम् । तथापि व्याख्यायते तत्र नमस्तेऽस्तु इत्यंतस्य पूर्वसंगतत्वेन व्याख्येयास्ते इत्यादिकं व्याख्यायते ॥ हे **भगवः** षड्गुणपूर्ण । तव **सहस्रधा बाहवः** अनन्तप्रकाराकारकरयोः । नराकारत्वाद्विवचनम् । तथापि नराकाराणामपि अनंतत्वात्तत्कराणां ततोऽप्यानंत्यात् दिनानन्त्याश्रया घटिकानन्त्यवत् बाहुवोरिति कथमिति चेदुच्यते । प्रकाशकार्कश्यगुणौ दधानास्तनौ तरुण्यः परिवव्रुरेनमिति माघव्याख्याने (३-१४) स्तनान्दधाना इति वक्तव्यं स्तनाविति कथमित्याशंक्य प्रायेण द्वित्वविशिष्टा जातिरित्ययं अतः स्तनाविति संगच्छते इति प्यद्दभद्देन व्याख्यानात् । जातावेकवचनमितिवत् जातौ करचरणस्तननेत्रश्रोत्रादिगतकरत्वादिजातौ करचरणादि शब्दगतद्विवचनं ततश्च स्तनाविति द्विवचनं स्तनत्वपर्याप्तिमत्स्तनद्वयद्वयावयवकव्यूहपरं । यथा घटत्वादीनां घटादयो व्यक्तयः प्रातस्विकं पर्याप्त्यधिकरणानि न तथा स्तनत्वादीनां पर्याप्तिः एकैकस्तने किंतु संयोगादिवत् युग्म युग्म एवेत्यर्थस्य सिद्ध्या तद्वत्प्रकृतेऽपि बाहूनामनंतत्वेऽपि बाहुवोरिति द्विवचनं बाहुत्वजात्यवच्छिन्न बाहुद्वयद्वयरूपानेकव्यक्तिकसमुदायपरं इति नानुपपत्तिः ॥ सहस्राणि **बह्वचो हेतयो**ऽग्निज्वाला इवोज्वलंत्यः याः सहस्रमनेका हेतयो बाणकृपाण्यादिरूपिण्यः, 'विंशत्याद्याः सदैकत्व इत्यनुशासनाच्छतं ब्राह्मणा इतिवत् सहस्रं हेतय इति ज्ञेयम् । 'शब्दः शतं दश सहस्रम् । शब्दो बहुत्ववचनः शतमित्य'पीत्यादि श्रीमदुक्तेः (म.भा.ता.नि. १-१६,१७) सहस्रशब्दोऽनेकवाची ज्ञेयः । बहवो हेतयः **अस्मत्** अस्माकं **अन्यं** वैरिणं **निवपंतु** । स्वसामर्थ्यप्रकाशनद्वारोद्गिरयंतु । पातयंत्विति यावत् । उद्भान्तरक्तं वा कुर्वंतु । बाहुवोरिति यणकरणेन द्वयोरेव भुजयोः संधिरत्रेति द्योतयति । बाहुवोरिति द्विवचनेन च द्विशोद्विश आनंत्यं द्योतयति । द्वावेवानंतस्यानंतौ जाताविति महामाहात्म्यं हरेराह । 'आनंदमात्रकरपादमुखोदरादि'रिति श्रीमदुक्तेः । 'तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते' इति

श्रीभगवदुक्तेः । यद्वा कारणकार्ययोरभेदात् बाहुशब्देन बाहुजयोः क्षत्रिययोः परिग्रहः । ततश्च भवतो रामलक्ष्मणयोर्हेतय इति वा महतश्चतुर्मुखादित्यादिनिर्देशात् । अन्यो यः याः तस्य हेतयः खड्गादयोऽस्माकं **मुखा** मुखतः **पराचीनाः** पराकृतगतीः अस्मद्विषये शक्ताः **कृधि** कुरु । कथं तद्धेतीनां भवदनभिमुखताकरणं सुशकं कर्तुं मयेति चेत्तत्राह । **तासामीशान** इति । तद्धेतीनामपि भवानेवेशानः न तेषां तद्धृतिशक्तिरस्तीति भावः । ''नर्ते त्वत्क्रियते किंचनारे । तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् । भ्रामयन् सर्व भूतानि यन्त्रारूढानिमायये''त्यादि श्रुतिस्मृतिभ्यः । तासां तत्र हेतीनां मुखामुखानि पराचीना परांचिनि परानरीन्प्रति गतिमतीः कृधि कुर्विति सन्मात्रं विहायासद्विषय एव तन्निशितमुखानि कुर्विति । **सहस्रशः** बहुसुखः यस्त्वम् **अधिभूम्यां** भूमौ ये रूद्राः रुद्रा इव क्रूरा राक्षसाः तेषां सहस्राणि बहूनप्रति सहस्रयोजने ॥ दवीयः पदवीव्यवहितप्रदेशे । धन्वानि धनूंषि तन्मसि विस्तृतगुणकानि करोषि । तस्मै नमः । यद्वा तेषां सहस्राणि प्रति सहस्रैरनेकरामाकारैः योजने संयोजने कृते सति । धन्वानि अप्रकृतिप्रतिकृतिप्रतिदर्शितनिजभुजमंडककोदंडांस्तन्मसि स त्वमव । अस्मिन्प्रत्यक्षसिद्धे महत्यगाधे अर्णवे समुद्रे अन्येभ्योऽपि दृश्यते इति वः ॥ अर्णसो लोपश्चे सलोपः । अर्णांसि उदकानि अस्मिन्नित्यर्णवः । सति सप्तमीत्वभ्रमं निवारयितु**मधि**शब्दः । तादृशे समुद्रेऽधि ॥ **विद्यमानाय** अन्तरिक्षे आकाशे वा **भवा** चरणदिना विद्यमानाः खचरा इति यावत् । तेषामित्यादि पूर्ववत् । ननु न तेषां मानुषरामभीः सम्भवति भवति भवः सोव्वैः सह सहायकृदित्यतो शङ्करा किङ्करा रामस्येत्याह । **नीलग्रीवा** इति ॥ ग्रीवाशब्देन जत्रुमात्रपरिग्रहः । ततश्च नीलजत्रुरूपग्रीवैकदेशाः **शितिकंठाः** उर्वरितशुभ्रकंठभागाः **शर्वा** रुद्राः । बहुवचनेनानेकीभूय यातानामप्यसामर्थ्यं द्योतयति । **अधः क्षमाचराः** अधःकृता च सा क्षमा च तया चरन्तीति तेऽधः क्षमाचराः क्षांतिरहिताः तामसप्रकृतय इति यावत् । अत एव

भृगुपरीक्षायां भागवते । यद्वाधः क्षमाचराः रामे गरुडारूढे सति तेऽधःक्षमायां केवलभूमौ सेवार्थं चरंतीति तथा । यः **सहस्रयः** बहुज्ञानः **अजने** उत्पत्तिरहित त्वं यदा तेषां तान्प्रति **धन्वानि** धनूंषि तन्मसि रुद्राणां **बहुत्वमिव** धनुषामपि **बहुत्वमौपचारिक** ज्ञेयम् । तदा ते अधः क्षमाचराः **पतनेन** धरित्र्यां लुठंतीति भावः । यदा तन्मसि तदा सहस्रयोजनेऽतिदूरं रुद्रा विद्रुता भवंतीति । ''पपात रुद्रोऽपि धराप्रकंपतः क्षमस्व देवेति ननाम पादयोः । तस्मिन्हते त्रिजगतां परमप्रतीपे ब्रह्मा शिवेन सहितः सह लोकपालैः अभ्येत्य पादयुगलं जगदेकभर्तुं रामस्य भक्तिभरितः शिरसा ननामेति'' चोभयत्र श्रीमदुक्तेः ॥ (म.भा.ता.नि. २२०,२२१,२१२)

उत्तरत्र वनान्युपसर्पंतीति रणात्तदनुरोधेन वनीयसर्वजनावनमपि त्वं दीनजनावनकार्य आर्य अरि-अतिहतिपूर्वकं करोष्येवेति नीलग्रीवा इति चतुर्थीमारभ्य दिशो रुद्रावतस्थिर इत्यन्तया चर्चा विज्ञापयति ॥ **नीलग्रीवा** इति ॥ नीलग्रीवाः नीलकंठाः भुजङ्गभुजः । नीलकंठो भुजङ्गभुगितिमयूर-पर्यायामरः । **सितिकंठाः** हंसाः । अंगोत्तमत्वादुत्तमांगग्रहः । तेषामित्यावर्तते तेषां पक्षिणां ये **रुद्राः** क्रूरा मारकाः कापुरुषाः दिव९ दिवं खं श्रिताः खंचरा इति यावत् । तेषां तान्प्रति त्वं धन्वानि तन्मसि चेत्तर्हि ते सहस्र-योजने दूरतरदेशे भवंतीति शेषः । त्वयि धनौ धूनयति निधनभियाऽ-वलाऽधंना अनवधानधियो बहुव्यवधानदेशं प्रति द्रुता भवंतीति भावः । अनेनानेनसो न मातृमात्सर्येण ते वनसेवनमपितु शुभंयूनामनूनहितायाहं युवां हत्या इति सूचितं अनेनसस्त इत्यन्वयः । (शुभंयुः शुभवान् योग्यजनः अहंयुः अहंकारी रक्षोजनः । ते वनपादचारणं भवति ।) ''अभयाय सतां हत्यै राक्षसानां ततो हरिः रामनामा दशरथात् कौसल्यायामजायत (म १-१८) । मर्त्यावतारस्त्विहमर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोरि''त्यादि वचनात् ॥ (मभाता २-१३५)

ये **वृक्षेषु** वनगतवृक्षेषु या **नीलग्री**वाः गोलांगूलाः कृष्णमुखा वानरा इति यावत् । ग्रीवापदस्य वदनपरत्वं हयग्रीवहयवदनपदयोरनतिभिन्नार्थत्वादेवं ज्ञेयम् । **विलोहिताः** विरोहितास्तन्नामकमृगाः । **रोहिताश्चमरो** मृगाः इत्यमरः। **सस्पिंजरा** बालतृणवर्णाः शुकाः । यद्वा सर्वांगं सस्पिंजरवर्णं, मुखं तु लोहितमिति लोहितरक्तवर्णयुक्ताः **सस्पिंजराश्चे**त्युभाभ्यां शुकानामेव ग्रहणम् । तेषामित्यादि पूर्ववत् ।। ये कपर्दिन इव कपर्दिनः रुद्रा इव विद्यमानाः केन धर्मेणेत्यतः साधारणं धर्ममाह । **भूतानामधिपतय** इति । भूतानां प्रमथानां प्रथमास्तेषां तान्प्रति **विशिखासः** बाणसहिता निधन्वनीत्यादि पूर्ववत् । न केवलं धनुर्विस्तारोऽभिमतहेतुरित्यतो विशिखास इत्युक्तिः । यद्वा विशिखासः कबंधाद्या सिखया सह वर्तंत इति शिखासः शिरसहितास्तद्रहिताः विशिखासः मुंडि(त)मूर्धानः । **कपर्दिनो** जटाजूटवंतो वा विकारा राक्षसा इति वा । विशिखासो मुंडि(त)मूर्धानः कपर्दिनः सजटाजूटा इति पर उक्तवान् । न मुंडितमूर्धत्वं मण्डितजटस्य पंडितमंडलाखंडलेभ्यो रोचत इति तच्चिंत्यम् ।

ये राक्षसाः चण्डालादिरूपवन्तः **पात्रेषु अन्नेषु** ओदनादिषु परिवेषितेषु सत्सु **पिबतः** परिषेचनानंतरं अमृतोपस्तरणमसीति मंत्रेण जलं पिबतः **जनान्विविध्यन्ति** । स्वस्वस्पर्शादिना निर्भोजनोपयुक्तं कृत्वा बाधंते । अन्नेषु अन्नादिविषये पात्रेषु पिबत उदकमात्रं गृह्णतो जनान् विविध्यंति ।। येष्वागतेषु संमानपूर्वमन्नादिदेयं तानुदकमात्रमयं चेदपि घ्नंतीति केवलधर्म निरतता सूचिता । अथवा पात्रेषु पुरोडाशादिरूपेष्वन्नेषु । अत्तॄनितिशेषः । विविध्यंति । तथा पिबतः सोमरसं पिबतः विविध्यंतीति वा तेषामित्यादि पूर्ववत् ।।

ये **पथां** मार्गेषु **पथिरक्षयः** पथिराः पथिलाः पथिकाः तेषाम् । क्षीति धातुग्रहः । ततश्च क्षिः क्षयो यैस्ते पथिरक्षयः । पथिकमथका इति यावत् ।

मिथिलादयश्चेतीलच् । पथे गतौ अकारस्त्येत्वं निपातनात् । इरा मद्यं तस्या इम ऐराः तेषां बृदं वृंदं समूहो येषां ते ऐलबृंदाः । एकेदेशविकृतानन्यन्यायेन बृंदं वृंदं ज्ञेयं । मद्यपायिसमूहसहिता राक्षसाः । यद्वेरा उदकानि तद्वत्वेन समुद्र ऐरः तत्र वृंद येषां ते । इलाया इम ऐलाः भूरिलाः । इलस्यादब्धि-मेखलेत्यभिधानात् । राजानस्तेषां वृंदं येषु ते । राज्ञ आज्ञातो ज्ञाता एव राज्ञो गृहीत्वा लंकायां स्थापयंतीति तात्पर्यं इरामघे च वारिणि इत्यभिधानम् । ऋज्रेन्द्र इत्यादि गौरवान्नेरामाला इत्यंतेन सूत्रेण निपातनात् इणो गुणाभावे चेरा इति ज्ञेयम् । संहतिर्वृंदं निकुरुंबमित्यमरः । इरा भू वाक् सुरासु चेत्यमरः । युवंति शास्त्रोक्ताशास्त्रोक्तशस्त्रयंत्रगुलिकाक्षेपणादिपूर्वं रूपं मिश्रीकुर्वंतीति यवो यवनाः म्लेंछास्त इव युध्यंतीति ते तथा ॥ तथा चाविहितयुद्धकर्तारः । तेषामित्यादि पूर्ववत् । परपक्षे पथां पथीति पुनरुक्तिः । ऐलवृंदा इत्यत्र बकार भकार तकार दकारोत्तराकारश्चेति कल्पनागौरवं ज्ञेयम् ॥ अण्प्रत्ययो निरर्थकश्च भवति ।

ब्रह्मकुलकालनरता यत्र पवित्रक्षेत्रादिकं तत्र विप्रवास इति नियमात्तन्मारणार्थं तीर्थादि चरंतीत्याह । **य** इति । ये राक्षसाः **तीर्थानि** पुण्यस्थलानि **चरंति** संचरंति । पातॄतुदिवचिरिचिसिचिभ्यस्थगिति थकीत्वे तीर्थमिति भवति तृधातोरिति भावः । क्षेत्राणि अथवा तीर्थान्युपाध्यायादि-महर्षीन् चरंति भक्षयंतीति । तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषु । अवतारर्षिजुष्टांभः स्त्रीरजःसुचविश्रुतमिति विश्वः । **सृकावंतः** सृकेन वज्रवत् दृढेनावंति रक्षंयंति स्वशरीरं स्वान्वेति तथा। तथैव **निषंगिणः** खड्गयुक्ताः। ये सृकावंतः इंद्रादयस्तान्प्रति निषंगिणः इति वा । अनेन शतपर्वधृकूसुपर्व-वरावस्था एताद्दशी, का कथा मानवानां तदाहाररूपाणामिति सर्वलयं सूचयति । तेषां सहस्रयोजन इत्यादि पूर्ववत् ।

ये **वनानि उपसंर्पति** सीतारामलक्ष्मणाख्या ये काननानि उपसर्पन्ति आगच्छंति तेभ्यो नम इति शेषः । तेषां त्रयाणां मध्ये यः तेषां पूर्वोक्तानां

रक्षसां सहस्रयोजने दूर एव कर्तुं धन्वानि तन्मसि तस्मै **व्युष्टिरुद्राय** विशिष्टा समूलवालं उष्टिर्दाहो यस्मिन्कर्मणि तथा रुद्रः क्रूरः तस्मै तयाक्रूरस्तस्मै नमः। अस्मत्कार्यं नमनं। त्वं चाव । तव कार्यमवनमिति । अथवा ये वनानि काननानि उपसंर्पति जलान्युपसर्पंतीति तन्मध्ये मध्यासीना वा तेभ्यो रक्षेभ्यो धन्वानि तन्मसि ताश्च व्युष्टिसमूलबालबलं भस्मीकरणं तेन कर्मणा रणे रुद्रः क्रूरस्तस्मै । यस्ते यांस्तान् सहस्रयोजने तमसि तन्मसि स त्वमवेति वा ।

एवं प्रकारेण रावणहननानंतरं किंच कार्यं भावीत्यतस्तदाह ।**य** इति । ये त्रयः **ग्राम्यां** अयोध्यापुरप्रजां प्रति उपसंर्पति आगच्छंति तदा तेभ्यः **व्युष्टिं** विगता उष्टिस्तापो यस्मिंस्तम् । पाद्यार्थं तुहिनसलिलकिसलयाद्युपचारमुपासते चरंति तेषां जनानां इह सहस्रयोजने पुत्रपौत्रपारंपर्ययोजने संयोजने अवधन्वानि अपगतमरुकाणि । अपगतो धन्वा मरुदेशो येषु तानि । कनिन्यादिना वः । सुफलानि स्थलानीति यावत् । समानौ मरुधन्वानौ इत्यमरः । तन्मसि सर्वं समृद्धिं करोषीति यावत् । ये पूर्वं तु त्रयाणां प्रसक्तिर्यद्यपि तथापि तन्मसीत्येकवचनं मुख्यः कर्ता राम इति बोधयति । न चैहिकं पद्मरागतंडुकमुष्टिन्यायेन फलं त्वत्प्रसादस्यापि तु मुक्तिरेवेति सूचयति। तेषां स्वोपचाराचारान् सहस्रयो बहुज्ञानस्त्वम् । अजने न विद्यते जनःजननं यस्मिंल्लोके सोऽजनो मोक्षस्तत्र तन्मसि करोषि । मुक्तान् करोषीति यावत् । ये व्युष्टिं उपासते चरंति तेभ्यो भागवतेभ्यो ग्राम्यां मूर्खजनीयां प्रवृत्तिम् । ग्रामाद्यखञाविति यः । ग्राम्यो मूर्खो ग्रामभव इति हेमचंद्रः । उपसंर्पति तेषां **सहस्रयोजने** हस्रैरेकदेशविकृतन्यायेन हिंस्रैः तामसानां तमःपातनानंतरं रूक्षरक्षोरदखरनखरक्षतिकृतियातना अनुभावयद्भिः संयमनीनियामकदूतैः तैः सहिताः सहस्राः अमुख्यदूतसहिता मुख्यदूतास्तैर्योजने संयोजने कार्य **एव धन्वानि** तन्मसि । त्वयि धनुर्धुन्वति सति पतितास्तमस्येव पतिता इति निश्चय एवेति भावः । तेषां सहस्रयोजने

**कार्ये** पूर्वं, धन्वानि तत्स्थलानि मरुप्रायाणि तन्मसीति वा । उक्तं च ''क्षुत्सामान्नूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताक्षानामग्रानंधकूपे क्षुरमुखमुखरैः पक्षिभिर्वीक्षितांगा''निति वायुस्तुतौ । नमिकंप्यादिहिंसदीपो रः इत्यंतेन हिंस्रा ह्स्रा हिंसका इति ज्ञेयम् । यद्वा स्फायीत्यादि हसिसिधिशुभिभ्यो रगित्यंतेन हसे रक् । ह्स्रा मूर्खाः पूर्वं नरके तमसि वा पातितास्तैः सह वृतं सहस्रं तमस्थलं तद्योजने इति वा ।

न केवलं लंकौकनायकादिमारणमात्रमपि तु दुरात्ममात्रवधोऽपि तावक इत्यावेदयति । **एतावंत इति** । एतावंत एतत्परिमाणमेषां त एतावंतः । यत्तदेतेभ्यः परिमाणे वतुबिति वतुपि, आ सर्वनाम्नः इत्यात्व एतावंत इति भवति । **भूयांस** इतोऽपि बहुसंख्याकाः । बहो र्लोपो भूच बहोरितीयसुनीकारे लोपे भ्वादेशेन भूयानिति भवति । **दिशः** दिक्षु **वितस्थिरे**ऽवस्थिताः तेषां सहस्रयोजन इत्यादि पूर्ववत् । एतावंतो नक्तंचरा तेषां सहस्रयोजने बहुफलसंयोजने **रुद्राः** पार्वतीपतय एव भूयांसो बहुमता मान्या इति यावत् । अत एव दिशः दिशंति तदपेक्षितमिति दिशो दातारः । तेषां तान्प्रत्यपि धन्वानि तन्मसि । अनेन तदाश्रयगिरिशान्प्रति धन्वान्यातन्वानस्य दुःशकं किं शंकरकिंकरमारणमिति द्योतयति । यद्वा एतावंत एव तवावताराः न अपितु भूयांसः दिशः दिक्षु रुद्राः राक्षसरुद्राः वितस्थिरे । तेषामवताराणां सहस्रयोजने सहस्रैर्विश्वादिरूपैर्योजने संयोजन एकीकरणे चैतावंत एव तादात्म्यादिति भावः । तेषां तेरप्यनन्तैरूपैर्धन्वानि तन्मसीति वा । चौ परस्परावतारसमुच्चयो ज्ञेयौ । एतच्च वंदामह इत्यारभ्य रमतेऽधुना श्लोकैः संग्रहरामायणतः स्पष्टं ज्ञेयम् ॥ ११ ॥

**नमो रुद्रेभ्यो ये पृथिव्यां येंऽतरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयंतु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जंभे दधामि ॥ १२ ॥**

इदानीं संक्षेपतः सप्तकांडकथामूलमभिधाय किंपुरुषे वर्षे हर्षेण हनुमान् सर्वाणि चाणिमादिमंति रुपाणि सदोपदिशति सदाशिवादिभ्य उत्तमेभ्यो गंधर्वादिभ्यो मध्यमेभ्योऽधमेभ्यो मानुषेभ्यश्चेत्युत्तरकथाशेषमूलं संक्षेपतो वक्ति मंत्रत्रयेणेत्याह । **नम** इति । पृथिव्यां भूमौ ये जना जनार्दनभजका ये च दिवि गंधर्वाद्या मध्यमा येंऽतरिक्षे रुद्राः तेभ्यो रुद्रादिभ्यः उत्तमेभ्यः वर्षं वर्षे किंपुरुषखण्डे । इषवः । इषुः बाणाभिमानी वातो वाततनूजो हनुमान् । येषां पूर्वोक्ताधिकारिवर्गाणाम् । अन्नम् उपजीव्यं रामं तेभ्यः उपदिशतीति शेषः । अन्नमिति सामान्यत उक्तरामाकृतीराह । दशेति । इषवो दैत्यहिंसका इति भगवदाकृतिविशेषणं वा । इषगतिहिंसादर्शनेषु । ईषेः किच्चेत्युः । स च कित् आदेरिकारे चेषुरिति भवति । सर्वत्र व्याप्ता वेषवः । दश दशसंख्याकाःमत्स्याद्याः प्राचीः रामात्पूर्वभाविनीः मच्छादिभार्गवांताः । तथैव प्रतीचीः कृष्णादिकल्क्यन्ताश्च । तथैव दशदक्षिणा रमाकृतीः । प्राचीः जानकीतः प्राग्भवा उदीचीः उत्तरतो भवाश्च दक्षिणा रमाः एवं दशदश शतसहस्रानंताः अनंतस्याकृतीस्तेभ्यो नमो नमः । ताश्च स च ते च ते रामे तराः रामश्चेति ते । पुमांस्त्रियेत्येकशेषः । ते च नोऽस्मदादीन्मृडयंतु सुखयंतु । अस्मद्व्यापारो नमस्कारो रामादिकव्यापारश्चाकंपानुकंपातोऽस्मद-वनमिति भावः । इष्टप्राप्तिवत् अनिष्टनष्टिरपि प्रार्थनीयेति तां चापि प्रार्थयत इत्याह । **यमिति** । वयं यं द्विष्मः यं प्रति क्रोधेन द्वेषं कुर्मः यश्च नः सज्जनानुद्दिश्य द्वेष्टि द्वेषं करोति तं वो रामादीनां जंभे आततास्ये दधामि । क्षिपामि भवत् ग्रासायेति शेषः । यद्वा जंभे जंभाभिधाने दितिसुते । इंद्रो यथा तथा वैरिणं प्रति पातयतेति दधामि मतिमिति शेषः । चरमगिरिकुरंगी-तुंडकंडूयनेन स्वपिति सुखमिदानीं अंतरिंदोः कुरंग इत्यादाविवेव शब्दाभावेपि संभवति चोपमानोपमेयभाव इति लुप्तोपमा वो जंभे दन्ते दधामि । वो भक्ष्ये वा । जंभासु हरितेति सूत्रव्याख्यावसरे जंभो भक्ष्ये दंते चेति कौमुदीतीत्थं व्याख्यातमिति ज्ञेयं सामस्त्येनाधिकारिभेदेन चाह । **नमो रुद्रेभ्य** इति ।

स्पष्टोऽर्थः । प्रागुदगूर्ध्वोदक्प्रतीच्यादिषु प्रागाद्यग्रांगुलिपूर्वकनमस्कारकरणं हिंसकादी रुद्र इति परव्याख्या विशेषार्थानापादकत्वादननुसंधेयत्वाच्चोपेक्षणीया प्रेक्षावद्भिरिति अलम् । मत्स्याद्यकेशवाद्यविश्वादि पराद्यजिताद्यनेकावतारमाहात्म्यं रामायणब्रह्मसूत्रादिसर्वं शर्वादिभ्य उपदिदेश भारतीश इति भावः । इदं च सर्वं 'वंदामहे सुंदरमिंदिरेशमित्यारभ्य प्रेष्टात्मकाछ्रेष्टसुतान्निशम्य रुद्रादिदेवा मुनिपुंगवाश्चे'त्यंतेन संग्रहरामायणे संगृहीतं बोध्यम् । न च मत्स्यकूर्मभार्गवबुद्धावतारेषु रमारूपसंबंधोऽश्रुत इति कथं दक्षिणासाहित्यमिति वाच्यम्, तत्रापि रमारूपं विना पूज्यताया देवेनैव निवारितत्वान्मंगलदेवतावतारोऽपि ज्ञेय एव तथाच श्रीमदुक्तिर्धन्याश्चर्योपाख्याने ''सर्वोत्तमोऽसीत्यवदं स चाह न केवलं मेंऽकगाया श्रियोऽहम् । सदोत्तमः किंतु यदानु सा मे वामार्धरूपा दक्षिणा नामधेया । यस्मात्तस्या दक्षिणतः स्थितोऽहं तस्मान्नाम्ना दक्षिणेत्येव सा स्यात् । सा दक्षिणामानिनी देवता च सा च स्थिता बहुरूपा मदर्धा । वामार्धो मे तत्प्रविष्टो यतोऽहि ततोऽहं स्यामर्धनारायणाख्यः । तदाप्यस्या उत्तमोऽहं सुपूर्णो न मादृशः कश्चिदस्त्युत्तमो वा । इत्येवावादीद्दक्षिणाभिः सहेत्यादि'' । एवं सप्तकांडरामायणमूलमेतद्ध्येयममत्सरैर्विदूरसैः । शतरुद्रियं रुद्रोऽपि न शतरुद्रियस्यार्थ इति न । किंतु रामो मुख्यार्थोऽमुख्यस्तु स्थाणुरित्यशेषगतिमंगलम् ॥ १२ ॥

**अनेन नमकव्याख्याकरणेन भवेच्च यत् । सुकृतं तस्य पात्रं मे गुरवो मुद्गलाभिधाः ॥ १ ॥ श्रीसत्यबोधगुरुराट्मानसाभिधमानसे । रममाणो रमारंता हंसो रामः क्रियाद्दयाम् ॥ २ ॥ नमकव्याकृतेः पूर्तिर्न मे कत्संधया भवत् । बलं यस्मात्सत्यसंधाभिधाजीवातुकेतवः ॥ ३ ॥ इति श्रीनमक-व्याख्याकरणेन हयाननः । रामात्मा श्रीवादिराजवरदो दययेन्मयि ॥ ४ ॥**

**इति श्रीमन्नवरत्नमुद्गलाचार्यसुततच्छात्रपुरुषोत्तम-विरचित-नमक-यथार्थ-मार्ग-प्रदर्शिन्यां ललितपदमञ्जर्यां मन्दोपकारिण्यां यजुः संहिताचतुर्थकांड पंचमप्रपाठके एकादशोऽनुवाकः । श्रीकृष्णार्पणमस्तु ॥**

## ॥ श्री रुद्रव्याख्यानं विष्णुपरम् ॥

## ॥ श्रीमदानन्दतीर्थान्तर्गतलक्ष्मीहयग्रीवाय नमः ॥ श्री गुरुभ्यो नमः ॥

**नस्तो विस्तारयन् विद्या आद्यः श्रीसैन्धवाननः । चमकव्याकृतिकृतौ दिश्यान्मेऽसदृशीं दृशम् ॥ १ ॥ शब्दार्थमानज्ञानेन रचितं न मयोचितम् । शोधयन्तु विधायैतद्विदवःसोदयादयाम् ॥ २ ॥ हसंतु वातिचतुराः निंदंतु च न मे क्षतिः । केवलं गुरुसेवैकेबलो बालोऽप्यहं यतः ॥ ३ ॥**

**अग्नाविष्णू स जोषसे मा वर्धंतु वां गिरः । द्युम्नैर्वाजेभिरागतम् ॥ १ ॥**

विश्वामित्रोऽमित्रतोत्रायितस्तोत्रं कृत्वा यद्धोत्रादिभिः सत्रादिकं क्रियते, कर्म, तत्फलं, तत्साधनं च त्वदधीनमेवेति त्वत्तोषार्थमेव सवनाद्यारब्धं न प्रधानतो मयाऽनामय तव संकल्पेनाल्पमनल्पं वा कल्पतादिति वसोर्धारादि विशिष्टार्थोपदेशापदेशेनास्मिन्सप्तमे सप्तमकांडकथासमनन्तरमपि सतां सदा राममनोरमचरितश्रवणे सतामुत्तरकांडार्थमात्रे समापिते मनोविरामः स्यादिति पुनर्बालकांडकथाशेषं कथयतीति प्रकथयति । **अग्नाविष्णू** इति ॥ नन्वयं यज्ञादिक्लृप्तिरूपव्यापारो निरूपयितव्यो बालकांड एवेति व्युत्क्रमः कृतः कुत इति चेन्न, सदा स दाशरथिकथाकर्णनवर्णनादिभिः कर्णरसनादिभिर्भाव्यमिति इतः किंकथयति वेति निजजनाधिं गाधिजो निराकर्तुं सीताभर्तुर्बाललीलां विलासयितुं सप्ततंत्वादिकं तावकमेवेति वदतीति युक्त उक्तो क्रमः । अत एव श्रीवाल्मीकिसंप्रदायविदः अद्यापि पुनः प्रथमं कांडणमारभ्य तदनंतरं **उत्तरकांडशेषं** समापयंति । अग्निश्च विष्णुश्च **अग्नाविष्णू** । देवता द्वंद्वे चेत्यानङ् । विषेः किच्च विषेर्नुः । स च कित्, विष्णुः । सजोषा सजोषसौ । समानप्रीती, मत्कृत योग्यता समसेवौ वा । जुषी प्रीति सेवनयोः । **वां** युवां कर्म **इमा** अस्मदीयाः **गिरः** स्तुतिवचनानि । कर्तृ **द्युम्नैः** प्रकाशमानरत्नहिरण्याद्यैः **वाजेभिः** वाजैः अन्नैः आहुत्यादिरूपैः सह **वर्धंतु** वर्धयन्तु वृद्धा भवंतु । युवांच आगतं आगच्छतम् अस्मद्धितायास्मान्प्रतीति

शेषः । वृद्धिर्गीर्षु न अपि तु स्तोत्रकर्तृपुरुषेष्विति भवति परार्थमिति क्रियाफलस्य परगामित्वाद्वर्धत्विति परस्मैपदं, चान्द्रादिमतेनवेति ज्ञेयम् । वां युवयोः गिरः अस्मदाश्वासनरूपा वाचः वाजेभि इह लोके द्युम्नैः स्वरूप-ज्ञानादिभिर्मुक्तौ सह आगतं भवत्समीपमागतं मामिति शेषः । मदुपलक्षित सर्वसत्समूहं वर्धतु । अन्तर्णीतण्यर्थोऽयं धातुः । अग्नेश्च भगवदवगतिद्वारा मुक्तिप्राप्तिहेतुत्वात् क्रियावतः प्रति प्रतीकत्वेन पूर्वमुक्तिरिति ज्ञेयम् । अत एव श्रीमद्भाष्योदाहृतब्राह्मवचनम् । ''अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः । प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनामिति'' ॥ अनेन जीवमुख्यप्राणेत्यादिसूत्रार्थमूलमुक्तं भवति । नो गिरः वां वर्धतु तुष्टौ च द्युम्नैर्वाजेभिश्चाप्रधानैः सहागतमिति वा, सहयुक्तेऽप्रधान इति तृतीया, सहयोगाभावेपि भवति तृतीया । सह सहिता । वृद्धो यूनेति निर्देशात् । भवदागमनेन मम समस्तमनोरथपूर्तिरिति द्रविणान्नयोरप्राधान्यं ज्ञेयम् ॥ १ ॥

**वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्रावश्च मे श्लोकश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽगानि चमेऽस्थानि च मे परू९ सि च मे शरीराणि च मे ॥ १ ॥**

तत्र प्रथमेन सर्वं सर्वेश्वरादेव देवाद्वासुदेवादेव भवति सर्वस्येति रामादेव सर्वक्लृप्तिं प्रार्थयते विश्वामित्र इति वक्ति । **वाजश्चेति** । वाजोऽन्नं चैव न । द्युम्नं च पूर्वमुक्तत्वाद् द्युम्नग्रहणं युज्यते, मे मदुपलक्षिताधिकारिवर्गस्य कल्पतामिति दाशमस्य सर्वत्र सम्बन्धः । सम्पद्यतां भवद्भ्यामिति शेषः । चाः वक्ष्यमाणैः सह सुमुच्चये । वा योग्यतोपमया जायत इति वाजो मोक्षस्तं वा । वा विकल्पोपमानयोः । अन्येष्वपि दृश्यत इति जनेर्डः ।**प्रसवः** प्रकृष्टं

सवः सांगो यागश्च, अन्ने भुक्ते रोगादिनाचातृप्तौ किं तेनेत्यतो वा प्रार्थयते प्रसव इति । प्रसवं वाजभोजनजन्यं फलं च, शुद्धं जन्म वा, प्रसवस्तु फले पुष्पे प्रसवो गर्भमोचन इत्यमरः । यद्यपि प्रसवशब्दः फलविशेषार्थः तथापि फलमात्रार्थकत्वमाश्रित्य व्याख्यातम् । वाजः कल्पतामित्यनेनैव तदनुज्ञान-ज्ञापनात्पुनः प्रसवोऽन्तानुज्ञानमितीरयन्परः परास्त इत्यनेन ज्ञेयम् ।**प्रयति**-रिन्द्रियनियमः । प्रयत्नो वा । **प्रसितिः** असारसंसारबंधः सितिः तस्माद्वंधात्प्रकृष्टो दुःखामिश्रसुखकारी भवत्स्नेहानुबंधः । **धीति**र्धारणम् । **क्रतु**र्ज्ञानम् । 'स क्रतुर्ज्ञानरूपत्वादिति, क्रतो स्मर कृतं स्मरे'तीशावा-स्योपनिषद्भाष्ये श्रीमदुक्तेः । **स्वर**श्चान्तोदात्तादिः । स्तुतशस्त्रोपयुक्तस्वरो वा । सु शोभनो रस्तन्नामकत्वदोकः सुधासमुद्रो वा । **श्लोकः** कीर्तिः । पद्ये यशसि च श्लोक इत्यमरः । **श्रावः** श्रावयितृता, उपदेष्टृत्वमिति यावत् । **श्रुतिः** श्रवणसामर्थ्यं वेदो वा । **ज्योतिः** प्रकाशः । आंतरं बाह्यं च । द्युतेरिसिन्नादेश्च ज इति ज्योतिरिति भवति । **सुवः** स्वर्गः । **प्राणः** हृदयगतः । **अपानो** गुदगतः । **व्यानः** सर्वशरीरगतः । **असु**श्चेतीतरौ प्राणौ असुरुदानः कंठस्थः, समानो मध्यदेहगः । ''हृदि प्राणो गुदेऽपानो व्यानः सर्वशरीरगः । उदानः कंठदेशस्थः समानो मध्यदेहग'' इति वचनात् । स्वस्वकार्यप्रवर्तकाः स्युरिति प्रार्थनाभिप्रायः । श्रुतिरसुरिति निर्देशेन पुंसि-भूम्न्यसवः प्राणा इति वदन्नमरो बभ्रामेति दर्शयति । **चित्तं** मनः । अग्निं प्रतीदं प्रार्थनम् । **अधीतं** आम्नायाभ्यसनम् । मुक्त्यनंतरं प्राप्तं सुखं सुखवृद्धिर्वा । **वाग्वा**णी स्तुतिरूपिणी । क्विब्वचिप्रछिश्रिस्नुद्रुप्रज्वां दीर्घोऽसंप्रसारणं चेति वचेः क्विपि दीर्घे वस्वा संप्रसारणे वाक् इति भवति । **मनः** मानसम् । विष्णुं प्रतीदं प्रार्थनं, विषयभेदाच्चित्तमनसोः पृथग्ग्रहणम् । अनुगुणं चेदमग्राविष्णू इत्युपक्रमस्य भवति । एवमुत्तरत्रापि व्यवस्था ज्ञेया । **चक्षुः** नेत्रम् । **श्रोत्रं** श्रवणेन्द्रियम् । **दक्षः** पाटवं अग्निं प्रति । **बलं** विष्णुं प्रति परव्याख्या त्वगतिगतयेति ज्ञेयम् । **ओजो**ऽवष्टंभसामर्थ्यम् । **सहः** सहनसामर्थ्यं

**पूर्ववद्वोभयान्वयः** । **एतीत्यायुः** प्रसिद्धो जीवितकालः । **जरा** वार्धकंच केवलं वासुदेवस्मृतिहेतुरिति कल्पतामिति प्रार्थयते । **आत्मा** परिदृश्यमान देहस्थितो जीवः । **स्वामी भवान्वा** । **तनूः** तव शरीरं कल्प्यताम् । **मुन्नेत्रपात्रं** भूयादितिभावः । आत्मा स्वभावो धैर्यं वा । आत्मायत्नेधृतौ जीवे स्वभावे परमात्मनीत्यभिधानम् । पूर्ववत्स्तुत्यभेदात् **तनूः** शरीराणीत्युक्तमिति वा । **शर्म सुखम्** । **वर्मांगरक्षाकरं** कवचादि प्रसिद्धम् । अथवा वर्म नारायणमयं वर्म । **अंगानि** करचरणमुखनासिकाशिर आदीनि । **अस्थानि** अस्थीनि । **परूंणि** अंगुलिपर्वाणि । **शरीराणि** गात्राणि, स्वकीयविवक्षया शरीराणीति बहुवचनं, भाविस्वशरीरविवक्षातो वा, यद्वा परूणि मनोग्रंथिविशेषाः । अर्तिपृवपियजितनिधनितपिभ्यो नित् । पृधातोरुसिः सचानित् परुर्ग्रंथिविशेष इति कौमुदीतो ज्ञेयम् । चक्षेः सिच्चेति चक्षः । असिसंजिभ्यां क्थिनिति क्थिनि भवितव्यमस्थीनीति तथापि छांदस आकारः । शर्मवर्म सर्वधातुभ्यो मनिनिति शृवृञोर्मनिनिरूपं ज्ञेयम् । हुयामाश्रुभसिभ्यस्त्रन्, श्रोत्रं श्रावः । श्रुश्रवणे, यद्यपि वौक्षुश्रुव इति विपूर्वकश्रुधातोरेव घञ् विहितः, तथापि योगविभागाद्वा छांदसत्वाद्वा तत्पूर्वकोऽवसेयः । शृपृवा श्रुतिः । श्रुजीषिस्तुभ्यः करणे । श्रूयतेऽनयेति श्रुतिः । स्त्रियां क्तिनिति क्तिन् । एवमेव प्रत्ययादयोऽपि शब्दाः ज्ञेयाः । उब्जेर्बले बलोपश्चेति उब्ज आर्जवे अस्मादसुन् स्याब्दले वाच्ये व लोपगुणयोरोज इति भवति । ओजोदीप्तावबष्टंभे प्रकाशबकयोरपीति मेदिनी । षह मर्षणे मनु अवबोधने सर्वधातुभ्योऽसुनिति ततोऽसुनि सहो मन इत्यादि भवति । सहो बले नपुंस्येव पुंसि हेमन्तमार्गयोरिति मोदिनी ॥ आत्मा सातिभ्यां मनिन्मनिणौ णित्वात् वृद्धौ ज्ञेय आत्मेति । कृञ कतुरिति क्रतुरिति ज्ञेयम् । कृशॄपृकटिकटिशौरिभ्य ईरन्निर्तीरनि शीर्यत इति शरीराणीति भवति ।

श्रुतिः कतिपयपदैः कतिपयसूत्रमूलं संक्षेपतः संजग्राह । ततस्तत्तत्सूत्रोक्त शब्दवाच्यत्वेन निर्वचनलभ्यगुणवत्वेन च रामं स्तौति मुनिः । तथाहि ।

प्रसवप्रयतिप्रसितिक्रत्वमजराधीत्यात्मेतिपदैः जन्माद्यष्टकग्रहणाज्जन्माधिकरणार्थः संगृहीतः । अनेन त्रिकं जन्मादिपदार्थ इति वदंतोऽपहस्तिता ज्ञेयाः । प्रसवो जन्म, प्रयति र्नियमः । प्रसितिर्बंधः । क्रतुर्ज्ञानम् । अमोऽज्ञानं, आवृतिः जरा वयोहानिर्मृतिरिति यावत् । धीतिर्धारणम् । आत्मा स्वरूपलाभो मोक्षः । ''उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृत्तिः । बंधमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराडिति'' स्कांदवचनात् । स्वच्छंदप्रवृत्तिः श्रुतिरिति न क्रमः । इति जन्माधिकरणार्थः संगृहीतो भवति । श्रुतिः श्रूयते इति श्रुतिः । अनेन शास्त्रयोनिसूत्रार्थः प्रकटितः । वाक् उच्यतेऽनेनेति वाक् सम्यक् शब्दजातेनोपक्रमादिलिंगैर्निरूप्यमाणे यद्ब्रह्म तद्वाक् अनेन समन्वयनयार्थः । अत्र उच्यते वचनवृत्त्या प्रतिपाद्यते इति वाक् इत्येव व्युत्पत्तिं अनेनेति प्रकृतशब्दजातग्रहणाय उक्तं । चक्षुः चष्टे ईक्षत इति चक्षुरितीक्षत्यर्थः । वाजप्राणमनश्चित्तशर्मपदैरन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया न कोशा अपितु कौसल्यात्मजाकारा एवेत्यानंदमयनयभाव आविष्कृतः । सुवरिति धुभ्वाद्यायतनत्वं, एकदेशग्रहणेनोपलक्षणया गायत्री शब्दवाच्यत्वेन गायत्र्यधिकरणतात्पर्यं वा सूचितो भवतः । असुरिति प्राणाधिकरणार्थः । ज्योतिः । द्योतितश्चानेन ज्योतिरधिकरणार्थः इतराणि पदानि तत्तदधिकरणोपयुक्तानि यथायथं ज्ञेयानि । एव मुत्तरत्रापि ज्ञातृभिरूह्यं, विस्तरभयादुपरम्यते ॥ १ ॥

**ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मे मेऽमश्च मेंऽभश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे ॥ २ ॥**

**ज्यैष्ठ्यं** वयसा ज्ञानेन वा । **आधिपत्यं** स्वामित्वम् । **मन्युः**यज्ञः । यजिमनीत्यादिना युच् । मन्युर्दैन्ये क्रतौ क्रुधीत्यमरः । कोपो वा । **भामः** तापकत्वशक्तिः सूर्यो वा । आदित्यस्य कल्पनं नाम प्रसन्नता एवं सर्वत्रापि ज्ञेयम् । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मनिति भाधातोर्मनि भामेति भवति । भाम आदित्य इति कौमुदी । **अमः** सुगतिः । परा परिवेद्यत्वं वा, गांभीर्यमितियावत् । **अम्भः** उदकं, स्नानपानोपयुक्तम् । उदके नुम्भौ चेत्यप्शब्दस्य नुम् भश्च । **जेमा** वैरिजनजेतृत्वशक्तिः । **महिमा** महत्वम् । भूसंपद्वा । **वरिमा** वरणीयत्वम् । **प्रथिमा** पृथुत्वम्, प्रसिद्धत्वं वा । पृथ्वादिभ्य इमनिज्वेतीमनिच् । पूर्वत्रापिज्ञेयम् । अत्र र ऋतो हलादेर्लघोरिति रः टेरिति टिलोपेच प्रथिमेति विशेषोऽवसेयः । **वर्ष्मा** शरीरम् । पुल्लिङ्ग-निर्देशाच्छक्तिमत्वम् शरीरस्य सूचयति । यद्वा वर्ष्म आचेति छेदः । आङ्कल्पतामित्यनेन वा वर्ष्मपदेन वान्वये सम्यक् कल्पताम् । शोभनं शरीरं वा कल्पतामित्येवार्थो ज्ञेयः । शरीरं वर्ष्म विग्रह इत्यमरः सर्वधातुभ्यो मनिन् इति मनिनि वर्ष्मा इति भवति । **द्राघुया** दीर्घदर्शितम् । बहुकालवर्तित्वं वा । वृद्धं प्राप्तवृद्धिकं तपआदिकम् । **वृद्धिः** कायिकी । **सत्यं** भूतहितं वचः । **श्रद्धा**स्तिक्यम् । **जगल्लोकः** ज्ञानिजनोवा वर्तमाने पृषत्बृहन्महज्जगच्छतृवच्चेति निपातनात् । गमेर्जगादेशो शतरिच जगदितिरूपं ज्ञेयम् । **धनं** द्रव्यम् विद्या वा । **वश** इच्छा गुर्वाज्ञानुवृत्तिर्वा मदाज्ञावर्तित्वं वेतरस्य । **त्विषिः** शरीररोचिः । **क्रीडा** ज्ञानवज्जनैर्भगवत्कथाप्रसङ्गः क्रीडा । जक्षन् क्रीडन् इत्याद्युक्तप्रमाणेन मुक्तैः सह क्रीडा वा । अक्षद्यूतादिर्क्रीडेतिपरः निषिद्धप्रार्थनानुचितेति नीरसमतिरिति ज्ञेयम् । **मोदः** स्वरूपसुखम् । **जातं** पौरुषेयं भागवतादि । जनेर्जनसनेत्यात्वे क्तेच रूपम् । **जनिष्यमाणं** रामायणादि । ननु रामायणं पूर्वमेव जातम् इति कथं जनिष्यमाणमिति चेत् लोके ख्यात्यभावादेवमुक्तिः । यद्वोत्तरभावि पुराणादिकम् । **सूक्त**मपौरुषेयम् । **सुकृतं** पुण्यं **वित्तं**वित्तिः प्रसिद्धत्वम् । **वेद्यं** ज्ञेयं परं तत्वमपरं च । **भूतं**

प्राचिचीर्णं मखादि । **भविष्यत्** उत्तरत्रानुष्ठेयं सत्रम् । **सुगं** सुसम्यग्गच्छंत्यस्मिन् जना इति सुगं सायं प्रातः सायमाहुत्यादिरूपं सत्कर्म । सुदुरोरधिकरण इति गमेर्डः । **सुपथं** सुशोभनः सफलः पंथा यस्मिन् तत्सुपथं ज्ञानरूपमार्गजनकं कर्म । 'कर्मणा ज्ञानमातनोति, नान्यः पंथा अयनाये' त्यादिश्रुतेः । ऋक्पूरब्धूः पथामानक्ष इति सूत्रादप्यप्रत्ययः । न पूजनादिति निषेधस्तु तत्पुरुष एव न बहुव्रीहौ । सुपथं चोरादिरहितोमार्ग इति तत्पुरुषसमासमङ्गीकृत्य व्याख्यात्परः सङ्ख्यावदुपेक्ष्यः । पथः सङ्ख्याव्यायादेरिति वार्तिककृत् । समासान्तग्रहणान्नेह सुपन्थाः अतिपन्थाः इति कौमुदी । न पूजनादिति समासान्तनिषेधः । तर्हिकथं विपथः कापथः वाटःपथश्चमार्गः स्यादित्यमरः इत्याशङ्क्य प्रमाद एवायमिति बहव इति तत्वसुबोधिनी । पथेगतावित्यस्मात्पचाद्यचिपथति व्याप्नोतीति पथशब्दोऽप्यस्तीत्यमर प्रामाणिकता भणिता मनोरमायाम् । तर्हि विपथसिद्धावपि न कापथः सिद्धः। कादेशदौर्लभ्यादिति न च वाच्यम् । ईषदर्थे चेति तत्संभवात् कुत्सायाम् अर्थतः पर्यवसानादिति च । केचित्तु पथः सङ्ख्येति कृतसमासान्तग्रहणेन न पचाद्यजं तस्य ग्रहणं बीजाभावाद्दुरूपपादाः विपथः कापथः पथा इत्याहुः । माधवस्तु परवल्लिङ्गापवादत्वात्तत्पुरुष एवेदं न बहुव्रीहौ । बहुव्रीहौ विपथी नगरीत्युदाजहारेति दिक् ।। यथा कथंचित्पथशब्दनिष्पत्तावपि न पुंस्त्वं तत्पुरुषे दुःसाधम् । **ऋद्धं** सांगं कर्मफलम् । **ऋद्धिः** सौभाग्यम् । यद्वाग्निं प्रति विष्णुं प्रति प्रार्थनाद्दृद्धं, भावेक्तः । ऋद्धिः । ऋद्धिरिति वा न पुनरुक्तिः । **क्लृप्तं** मनसा भाव्यत्वेन निश्चितम् । **क्लृप्तिर्**योग्यता । **मतिर्**बहिर्बुद्धिः, इच्छा वा । **सुमतिः** भागवतीबुद्धिः, शोभनेच्छा वा । मतिबुद्धिसूत्रव्याख्यानावसरे मतिरिहेच्छा । बुद्धेः पृथक् ग्रहणादिति हि कौमुदी ।। २ ।।

**शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च**

**मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मे भयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ॥ ३ ॥**

शं सुखम् । आशुशुक्षणिं प्रति । **मयः** प्रधानमोक्षसुखमिति विष्णुं प्रति । **प्रियं** प्रीतिकारककुमारादिव्यापारः मे मम । मे मदीयबन्धुवर्गस्य **काम** इच्छा । **अनुकामः** अनुसृत्य विद्यमानश्चासौ कामश्चेत्यनुकामः । राम त्वत्कामो यद्विषयः मत्कामः तद्विषय एव भूयादिति प्रार्थनाभावः । उत्तरपदलोपि समासाश्रयणान्नानुर्लक्षण इति वा, लक्षणेत्थंभूताख्यानभागवीप्सासु प्रति-पर्यनव इतिवा न कर्म प्रवचनीयसंज्ञेति ज्ञेयम् । तथाच श्रुतिस्मृती । ''कामे न मे काम आगात् । कामानुकूलकामत्वमिति'' । अनुकामो मदभिलाषानु-कूलः कामः । काम्यत इति कामो विषयो वा । भवान्भगवान्वा । 'कामो दातेति' श्रुतेः । अनुकामः काम इति विष्णुवन्हिविषयौ वा । सुमनसां शोभनमानसानां देवानां वायं **सौमनसो** विहिताचारः । **भद्रं** कल्याणम्, ऋज्रेन्द्रेति निपातनाद्धन्देर्नलोपे भद्रेति भवति । **श्रेयः** आचरितसुचरित-पुण्यम् । प्रशस्यस्य श्रः तत ईयसुन् । **वस्यः** वस्तु । **महो** गेहादिः । अर्हेकृत्यतृचश्चेति यत् । **यशः** कीर्तिः । सर्वधातुभ्योऽसुन् अशेर्देवनेयुट्चेति युटि प्रागकारस्य यकारे यश इति रूपम् । **भगः** तप आदि । **द्रविणं** द्रव्यम् । द्रुदक्षिभ्यामिननीतीननि गुणावादेशयोर्द्रविणमिति । **यन्ता** स्वाम्याचार्यादिः । **धर्ता** आधारः पोषको वा भवदादिः । **क्षेमः** प्राप्तवित्तपरिरक्षणम् । **धृतिर्विपद्यपि** धीरता । **विश्वं** जगत् । मदाद्यधीनो भवनमेव जगतः कल्पनम् । विश्वमुक्तमनुक्तं वा । **महः** पूजोत्सवश्च, तेजो वा, मह उत्सवतेजसोरिति मेदिनी । महपूजायामिति महधातोरसुनि मह इति भवति । अकारान्तः पुल्लिङ्गो वा महशब्दः । महं बहु महं बहु प्रकटमेवकृत्वेत्यादि महाकवि

प्रयोगात् । नभंतुनभसा सार्धं तपंतु तपसा सह । सहं च सहसासार्धं महंच महसा सह । तमेनच तमः प्रोक्तं रजेनापि रजः सममिति द्विरूपकोशः । **संविद**परोक्षज्ञानम् । सत्सूद्विषेति क्विप् । **ज्ञात्रम्** जानन्तिसर्वमितिज्ञाः सन्तस्तानात्रायते यतोऽतो ज्ञात्रम् त्वन्नामस्मरणादि । त्रैङ् पालने तत आत्वकत्वे । **सूः**सुते रेतःसेकेनेति पिता । **प्रसूः**गर्भधृतिपूर्वकं प्रकर्षेण सूत इति माता प्रसूः । पूर्ववत्क्विप् । **सीरं** सीरः सूर्यः । यज्ञभूशोधनाय लाङ्गलादिकं वा, शुसिचिमीनां दीर्घश्चेति क्रनिदीर्घेच सीरमिति भवति, सीरः स्यात्सूर्य-हलयोरिति मेदिनी । पुंस्त्वमविवक्षितम् । **लयः** स्वस्वोत्तमक्रमेणोक्तलयः । चितः प्राचिचीर्णानां कर्मणां क्षय उत्तरभाविनामसंश्लेषो वा । **ऋतं** ब्रह्म । 'ब्रह्मर्तमित्यु'क्तमित्यादेः । **अमृतं** मोक्षः । **अयक्ष्मं** नीराजरोगिता । यद्यपि क्षयः शोषश्च यक्ष्मा चेति नान्तः पुल्लिङ्गश्च तथैव राजयक्ष्मेव रोगाणां, यक्ष्मणापि परिहाणिरायययाविति माघो रघुश्च । यक्ष्मो रोगराज इति कौमुद्युक्तेर्मन् प्रत्ययान्तोऽकारान्तः, मनिनंतस्तु नकारान्त इति नानुपपत्तिः । यक्ष पूजायां क्षि निवासगत्योः आभ्यां मन्नेवोदाहृतसूत्रेण भवति । ततश्च भवतः क्षेमयक्ष्मौ । **अनामयं** सामान्यतो रोगाभावः । सामान्यविशेषभावेन वा विषयभेदाद्वोक्तिरवसेया । यक्ष्मं पूज्यत्वमिति वा । **जीवातुः**र्जीवनं तद्धेतुर्वा, जीवेरातुरित्यातुः । जीवनेऽपि स्याज्जीवातुर्जीवनौषध इति मेदिनी । **दीर्घायुत्वं** दीर्घायुष्ट्वम् । **अनमित्रं** वैरिराहित्यम् । अमिचिमिदिशसिभ्यःक्त्रः इति क्त्रः । **भयम**वहितकरणे भीः । अभयमितिवा । **सुगं** शोभनमार्गगमनम् । **शयनम्** अजगरवृत्या निराहारादिना निद्रा । **सूषा,** सुष्टु षस्तापः पञ्चाग्निभिः यस्यां क्रियायां सा सूषा । पञ्चाग्निमध्यवृत्तिरिति यावत् । सु शोभनोषा मेध्याश्वशिरोभिमानिनी । अत एवो'षा वाश्वस्य मेध्यस्य शिर' इति बृहदारण्यके । अनेनाश्वमेधादियज्ञसांगता प्रार्थिता भवतीति सूचयति । **सुदिनं** भगवत्कथानुकथनेन दिनस्य सौष्ठम् । 'यद्दिनं हरिसल्लापकथापीयूषवर्जितम् । तद्दिनं दुर्दिनमन्ये मेघछन्नं न दुर्दिन'मित्यादिवचनात् । परपक्षे सूषा इति प्रातः

कालो व्याख्यातः । सांतो ह्युषः प्रातर्वाची नाकारांतः किंच दिनमध्ये प्रातः कालोऽपि लब्ध इति पुनः प्रार्थनानुपपत्तिश्च । सामान्यावशेषभावकल्पनं च अगतिकतयेति न मनोज्ञमिति ज्ञेयम् ॥ ३ ॥

**ऊर्क च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णं च मे पूर्णतरं च मे क्षितिश्च मे कूयवाश्च मेऽन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च मे प्रियंगवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ॥ ४ ॥**

ऊर्क् सामान्यतोऽन्नम् । **सूनृता** प्रियवाक् । **पय** उदकम् । **रसो** मधुरादि । **घृतं** सर्पिः । **मधु** मक्षिकाविशेषवमनसंभवम् । मन्यत इति मधु । फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च इति धः । **सग्धिः** सगूसक्तवो धीयन्तेऽस्मिन्निति सग्धिः सक्तुपात्रम् । सितनित्यादिना सच्यत इति सक्तु इति तौभाव्यम् । छान्दसस्तोरभावः । **सपीतिः** विहितजनैः सहसोमपानम् । स्थागापपचोभाव इति क्तिन् । **कृषिः** यज्ञाद्युपयोगिधान्यभवनावनिः । सर्वधातुभ्यः इन् इतीन् । सचेगुपधात्किदितिकित् । ततश्च नगुणः । **वृष्टिर्वर्षः** । वृषेस्त्रियांक्तिन्निति क्तिन् । ष्टुत्वं च । **जैत्रं** जिःप्राप्त्यर्थकः । फलप्रापणशीलं ज्ञानादि । धनजितं स्वर्जित इत्यादेः जयशीलं वा । उद्भिनत्ति कूलादिकमित्युद्भिद्यः समुद्रस्तत्रभवं रत्नाद्यौ**द्भिद्यम्** । भिद्योध्यौ इति क्यप् । अनन्तरमण् । उद्भिद्य भुवं भवन्तीत्युद्भिदो वृक्षादयस्तत्र भवं फलादि वा । **रयिः** वेगवत्ता । शीघ्रकारितेति यावत् । **रायः** वित्तानि, रातेर्डैरिति रादान इत्यस्माड्डे रायो हलीत्यात्वम् । राःपुंसि स्वर्णवित्तयोरिति मेदिनी । रास्सुवर्णे धने जल इति हेमचन्द्रः । **पुष्टं** पूर्वमेव पुष्टं गात्रादि । **पुष्टिं**

पुण्यस्य। **विभु** आकाशादिव्याप्तवस्तु। **प्रभु** भगवद्रूपं शक्तं वस्तु। **बहु** अनन्तावतारत्वाब्द्हुलम्। **भूयः** पुनः पुनश्च साक्षिगोचरतया कल्पताम्। विप्रसंभ्यो ड्व संज्ञायामिति। विप्रपूर्वकत्वा भवतेर्डुः न्यंकादित्वात्कौ लं घिबंह्योर्नलोपश्चेति न लोपे बहुरिति भवति। भूयस्तु पूर्ववत्। **पूर्णं** पूर्तिः। यथायोग्यसुखं **पूर्णतरम्**। गुणैर्ब्रह्म त्वदात्मकम्। ''पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत'' इति श्रुत्यर्थः संगृहीतः। **क्षितिर्भू**मिं वासोपयोगिनिवासो वा। **कुयवाः** कुत्सिताः यवाः आकारतोऽह्स्वाश्चिक्कणतागुणरहिताः श्राद्धाद्युपयुक्तगोधूमाकाराः यवाः। जवीगोधीति संज्ञापभ्रष्टभाषया, 'यवोऽसि धान्यराजोवेति' श्रुतेः। 'यवोऽसि सोमदेवत्य' इति च। कुत्सितत्वं च धान्यराजस्याप्याकारतः संभवतीति-भावः। **अन्नमु**पजीव्यं गुर्वादि भगवत्पर्यन्तम्। कवजृसिद्रुपन्यनिस्वपिभ्यो नित् अन्नम्। परपक्षे ऊर्गऽन्नसामान्यम्। अन्नं प्रसिद्धमिति क्लिष्टकल्पना ज्ञेया। **अक्षु**त्क्षुदभावस्तृप्तिः। **व्रीहय**स्तंवकरयः। **यवा** इति विष्णुं प्रतीति न पुनरुक्तिः। परपक्षे युवशब्दो व्यर्थः। यद्वा यवा यवभिन्नधान्यानि तान्येव विशिष्याह। **माषा** इत्यादिना। **माषा** इति पित्र्ये कर्मणि मांसप्रतिनिधि-धान्यानि। **तिलाः** प्रसिद्धाः **मुद्गाः** मुदिग्रोग्गौ **खल्वा** मुद्गाकारास्ततोऽपि स्थूलाः। मटकीत्यपभ्रष्टसंज्ञा सुखेन छेदनार्हाः पदार्था वा। अगसीति संज्ञा। **गोधूमाः** गुधेरुमःप्रसिद्धाः। **मसूरा** व्रीहिविशेषाः। मसेश्चेत्युरन् प्रथमपादगतः ह्स्वमध्यः। मसेरूनन्निति पांचमिकः। सदीर्घमध्यः। द्वावपि व्रीहिविशेषपरौ। मसूरा मसूराव्रीहि भेदे पण्ययोषिति। मसूरामसुरोवानावेश्या व्रीहिप्रभेदयोः। मसूर मसुरौचद्वाविति मेदिनी विश्वकौशौ। गोधूमा धवलसर्षपा यवा गोधूमा इति वा। एष धवलो गोधूमः सुमनः समावित्य-मरः। **प्रियंगवः** कंगवः। नवणीति च लौकिकाः। स्त्रियौ कंगुप्रियंगूद्वे इत्यमरः। **अणवः** सूक्ष्मव्रीहयः। अणश्च धान्ये निदिति। उःनिद्भवति। व्रीहिभेदस्त्वणुः पुमानित्यमरः। **श्यामाकाः** गुग्गुलादयः। निशाविकासाः

पुष्पविशेषाः । स्त्रीशारिकौषधे । अप्रसूतां गवायां च प्रियंगावपि गुग्गुलौ । यमुनायां त्रियामायां शामा स्यादिति मेदिनी । **नीवाराः** । नौ वृ धान्य इत्यञ् । शूकधान्योपि नीवारा इति विश्वः । अपभ्रष्टभाषायां सांवीति ॥ ४ ॥

**अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मेशक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे ॥ ५ ॥**

**अश्मा** चिन्तामण्यादिः । सर्वधातुभ्यो मनिनिति मनिन् । अशिशकिभ्यां छन्दर्सीति छन्दस्येवाभ्मेति भवति । **मृत्तिका** प्रसिद्धा । **अगिरयः** लोचन-रोगाद्यभावपूर्वकमङ्गदार्ढ्यम् । कॄगृइत्यादिनाइः । गिरिर्गोत्राभिरोगयोरित्यमरः। **पर्वताः** प्रसिद्धाः । भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतजिति पर्व पूरण इत्यतोऽतचि पर्वत इति भवति । यद्वा गिरयः पर्वताः पर्वता देवाः । पर्वतः पादपे पुंसि शाक मत्स्यप्रभेदयोः । देव मुन्यन्तरे शैल इति मेदिनी । 'परावनात्पर्वतनामधेया'निति श्रीमदुक्तेश्च । गिरयः पर्वता इति प्रसिद्धा इतीरयन् परोऽनभिज्ञ इति मतिमदुपेक्ष्यः । **सिकता** वालुकाः । **वनस्पतयो** वृक्षाः पारस्करप्रभृतीनि च संज्ञायामिति पारस्करगणगणनातो भवति सुट् । **हिरण्यं** सुवर्णम् । प्राचीव रूपं ज्ञेयम् । **अयः** प्रसिद्धम् । **सीसं** गुलिकादि-साधनम् । **त्रपुः** अग्निं दृष्ट्वा त्रपत इति त्रपुः रंगः सीसं वा शॄस्वस्निहित्रप्य-सिवसीत्यादिना त्रपेरुः । तवर इत्यपभ्रष्टभाषा । **श्यामं** मरीचिलवणादिकम् । कृष्णायां वा । उक्किति कानडी भाषा । श्यामं त्रपु मरीचिसिन्धुलवण इति मेदिनी । **लोहं** सिलाविकृतम् । कब्बिणमिति भणंति कानडाः । **अग्निर्वन्हिः** । अङ्गेर्नलोपश्चेत्यगिधातोर्गत्यर्थस्य नौ प्रत्यये नुमभावे चाग्निरिति भवति । **आप**

उदकानि । आप्नोतेर्ह्रस्वश्चेतिह्रस्वःक्विप् । आपस्त्रीभूम्नि वार्वारीत्यमरः । **वीरुधो** व्रततयः । **औषधयो** धान्यानि । **कृष्टपच्यं** लांगलादिभिः कर्षणमात्रे कृते स्वयं जातम् । राजसूयेत्यादिनिपातनात्क्यप् । **अकृष्टपच्यं** कर्षणाभावेऽपि स्वयमेवोत्पन्नं धान्यम् । **ग्राम्याः** प्रायेण ग्रामे भवाः अजाद्याः **पशवः** । **आरण्याः** रुरु शश-पश्वनखमुखाः । **यज्ञेन** मत्कृतेन सवनेन सह **कल्पतां** फललाभहेतवो भवन्तु । यजयाचीत्यादिना यजतेः पूजाद्यर्थकस्य नङ् । ततः यज् इति स्थिते स्तोश्चुनेति श्चुत्वेन नकारो जयोगे च यज्ञ इति सुज्ञाः । **वित्तं** पूर्वार्जितम् । वित्तोभोगप्रत्यययोरिति विन्दतेः निष्ठातस्य त एव । **वित्तिर्लाभः** । **भूतं** सुतादिप्राणिजातम् । **भूतिरैश्वर्यम्** । **वसु** तोयं मणिर्वा । शॄस्वृस्निहीत्यादिनाकुः । वसु तोये धने मणाविति मेदिनी । **वसतिः** गृहादि । **कर्माग्निहोत्रादि** । **शक्तिः** पटुता गात्रे । **अर्थः** फलम् । निवृत्तिर्वा पापादीनामितिशेषः । अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः । **एमो** यथेछं ज्ञानम् । **इतिः** प्राप्यप्राप्तिः । आश्चर्यकारानन्दो वा **गतिर्मोक्षः** ॥ ५ ॥

**अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥ ६ ॥**

अग्निश्चमे अत्र सर्वत्रापि इन्द्रशब्दमुपाददाना श्रुतिर्नार्था अग्न्याद्या अपितु तदन्तर्गतो भगवान्परमेश्वर इति सूचितमर्थं सूचितवतीति ज्ञेयम् । अन्यथा कुतः पुनः पुनरभ्यसेत् । मध्ये सूचनेन च पुरतः पुराच पुराणपुरुष-परतोचितेति च ज्ञायते संदंशन्यायेन । इन्द्रः इदिधातोः ऋज्रेन्देत्यादिना रन्।

तथाचाग्निः प्रसिद्धस्तदन्तर्गतस्तापकशक्तिव्यक्तिकृदीश्वरश्च । सोमश्चन्द्रः । पूर्ववदर्थः । एवम् उत्तरत्र ज्ञेयम् । पूर्ववत्सुधातोर्मन् । **सविता** सूर्यः । रूपं पूर्ववत् । **सरस्वती** वाणी, संज्ञायामितिमतोर्मस्यावः । सरः स्वच्छन्दगमनं सार्वधातुभ्य इत्यसुन् । सरोऽस्यास्तीति सरस्वती । **पूषा** सूर्याणां द्वादशत्वा-त्तन्नामकस्य पुनर्ग्रहणम् । एवमुत्तरत्रापि ज्ञेयम् । पूष वृध्धावित्यस्य श्वन्नुक्षन्निति निपातनात् कन् । **बृहस्पतिः** सुराचार्यः तत् बृहतोः करपत्योश्चोरदैवतयोः सुट्तलोपश्च । **मित्रः** तन्नामा सूर्यः । **वरुणः** समुद्राभिमानी । कॄवृद्रारिभ्य उनन् । **त्वष्टा** विश्वकर्मा । **धाता**ब्जयोनिः । **विष्णुः** साक्षान्नारायणः । अत्र इन्द्रशब्दः साक्षात्परमैश्वर्यवन्तं भगवन्त-माहेति ज्ञेयम् । **अश्विनावा**श्विनयौ । **मरुतो** वायवः । एकोनपञ्चाशन्मरुतो वा । मृग्रोरुतिरिति मृधातोरुतिः ततः क्विप् । **विश्वे** तन्नामकदेवगणाः । यद्यपिसंज्ञायां न सर्वनामसंज्ञा । तथापि सामस्त्यार्थकत्वमप्यस्तीति न संज्ञात्वमात्रमिति जसः शी भवति । छन्दस्त्वाद्वा । विश्वेदेवा सभासद इति श्रुतेः । **देवाः** सामान्यतः सुराः । **पृथिवी** भूस्तदभिमानिनी च । प्रथेः षिवन् संप्रसारणं चेति षिवन् षित्वान्ङीप् । षवन्निति पाठादकारमध्योऽपि पृथवीपृथिवीपृथ्वीति शब्दार्णवः, प्रसंगादिदमुक्तम् । **अन्तरिक्ष**माकाशः तदभिमानी विनायकः । **द्यौः** स्वर्गः । बाहुलकाद्युतेरपिडो सू । द्यौ र्द्यौस्वर्गान्तरिक्षयोरिति मेदिनी । **दिशः** ककुभः । दिशेः क्विप् । **मूर्धा** देवोत्तमत्वादुत्तमांगरूपी विराट् । मूर्धैव सुतेजा इति श्रुतेः। नारायणो वा शिरो नारायणः पक्ष इति स्मृतेः । मुहेरुपधादीर्घ धकाररमागमकनः । मूर्धा ना मस्तकोस्त्रियामित्यमरः । **प्रजापतिर्द**क्षः ॥ ६ ॥

**अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म**

**ऋतुग्रहाश्च मेऽतिग्राह्याश्च मे ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च म माहेन्द्रश्च मे आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥ ७ ॥**

**अंश्वादयः** सोमग्रहाः । **रश्मिर्ग्रहग्रहणसाधनम्** । तथा च मन्त्रः । शुक्रेण गृण्हाम्यन्होरूपेण सूर्यरश्मिभिरिति । अश्नोतेरश्चेति रशादेशे मौ च रश्मिरिति भवति । **अदाभ्यो** ग्रहः । आसुयुवपीतिसूत्रे ण्यत्प्रकरणे लपिद-भिभ्यांचेति (सूत्रांक ७.३-३९) वार्तिकेण पूरणाद्दभिधातोः पोरदुपधादिति यद्बाधनेन ण्यत् । ततश्च दाभ्यो न भवतीत्यदाभ्यः । 'विष्णुर्गोपा अदाभ्यः' इति श्रुतेः । **अधिपतिरि**ति अधिग्रहः । श्रेष्ठो वा एष ग्रहाणामित्यर्थवादात् । **उपांशुश्चा**नुच्चैर्मन्त्रको ग्रहः । **अन्तर्यामः** ग्रहः । इन्द्रश्च वायुश्चेन्द्रवायू तौ देवते यस्य स **ऐन्द्रवायवः** । सास्य देवतेत्यादिना अधिकारः अण् । नद्यंतत्वात् द्वन्द्वे घीति वायुशब्दः प्राक् प्रयोज्य इति वाच्यम् । अजाद्यदन्तमितीन्द्रशब्दस्य प्राक् प्रयोगः सुयोगः । उदाहृतं तथैव कौमुद्याम् । इन्द्राग्नी इति । देवताद्वन्द्वे चेत्यानङभावस्तु वायुशब्दप्रयोगे प्रतिषेध इति वार्तिकेण भणति । अयं द्विदेवकः । **मैत्रावरुणः** मित्रः वरुणश्च द्वौ देवौ यस्य सः । अत्रानङ् अत्र दीर्घाच्च वरुणस्येति निषेधान्न देवताद्वन्द्वे चेति वकारवृद्धिः । **आश्विनो**ऽश्विद्देवताकः । **प्रतिप्रस्थानः** प्रतिप्रस्थात्रा कल्पितो ग्रहः । अयमपि द्विदैवत्यः । **शुक्रः मंथी आग्रायण** इति ग्रहः । **वैश्वदेवः** प्रातःसवनगत एकः । विश्वेदेवदेवताकः । **ध्रुवस्त**न्नामकः । **वैश्वानरः** ध्रुवावसानभवः । नरे संज्ञायामिति विश्वेत्यकाराकारः । तथैव च वैश्वानर-सूक्तपाठात् । ऋतवौ षट्ग्रहाः **ऋतुग्रहाः** । ऋतुषु वा । ग्रहा वा अर्तेश्च तुरिति तुः । ऋतुस्त्रीपुष्पकालयोरिति मेदिनी । **ग्राह्याश्च** ग्रहाः । इन्द्राग्नि-देवताक ऐन्द्राग्नः, अष्टसुकपालेषु संस्कृतं हविः । **ऐन्द्राग्न** आग्नेयमष्टाकपालं निर्वपतीतिश्रुतेः । मीमांसकमते गुणतो वा द्रव्यभेदः । वायव्यं श्वेतमालभेत ।

वायवे नियुत्वत आलभेत स हि क्षिप्रकारीति सामान्यवायुयागापेक्षया नियुत्वद्वायुयागार्थवादात् । विष्णुशिपिविष्णुदैवतयोरपि भेदाभिधानात् । तथाचारुणाधिकरणेऽरुणया पिंगाक्ष्यैकहायिन्या सोमं क्रीणाति इति वाक्यभेदभिया पार्श्वान्वयमंगीकृत्यैकवाक्यतांगीकृतेत्यादि तत्र द्रष्टव्यम् । **आदित्यः** सूर्यदेवताकः । **सावित्रः** ग्रहान्तरम् । सारस्वतः सरस्वतीदैवत्यः अयमभिषेचनीयार्थविकृतौ ज्ञेयः । सारःस्वतंत्रं गृहंगृण्हातीति तत्रैवोक्तत्वात् । **पौष्णो**ऽपि विकृतिग्रहः । अत्र पौष्णादेः पृथग्गृहणम् । प्रकृतिवद्विकृतिः कर्तव्येत्युक्तेरादित्यादिविकृतित्वेनेतिज्ञेयम् । इति सप्तमोनुवाकः ॥ ७ ॥

**इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म आग्नीध्रं च मे हविर्धानं च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृतश्च मे स्वगाकाराश्च मे ॥ ८ ॥**

**इध्मः** समित् । इषियुधींधीत्यादिना मक् । **बर्हिः**कुशः । बृंहेर्नलोपश्चेतीस् नलोपश्च । बर्हिर्नाकुशशुष्मिणोरित्यमरः । **वेदिः**रिष्टिका चितस्थानम् । **धिष्ण्याः** धिष्णियां ब्रह्माद्युपवेशनस्थानम् । सानसि-वर्णसि-पर्णसि-तण्डुलाङ्कुश-च षालोल्वलपल्वल-धिष्ण्य-शल्या इति ऋकारस्येकारे ण्यप्रत्यये षुत्वे च धिष्ण्यम् । धिष्ण्यं स्थाने गृहेभेऽग्नौ । धिष्ण्यस्थानाग्नि सद्मसु ऋक्षेशक्तौ चेत्यमरमेदिन्यौ । उरणिति रपरत्वं च न भवति निपातनादेवेति ज्ञेयम् । **स्रुचः** स्रुवः कः, चिक् च । कइत् कुत्वं च स्रुक् । दारवाणि करेण धार्यमाणान्याशुशिक्षणौ धृतप्रक्षेपणकरणपात्राणि । चमसाः ततोऽपि स्थूलपात्राणि । चमन्ति येषु ते **चमसाः** । सोमपानपात्राणि । अत्यविचमीत्यादिनासच् । **ग्रावाणः** लतारसनिष्कासनहेतुशीलाः । ग्रसेरात्वे

कनिनि च रूपम् । **स्वरवः** वज्रसमास्तुषानिष्कासनपरवो मुसलाद्याः । पूर्ववदुः । शतकोटिः स्वरुः शंभुरित्यमरः । उपरवाः । अनुब्रूहीत्युक्तिः समनन्तरभाविरवाः उपारवा इति छेदेनान्वयः । ऐकपद्ये उपसर्गेरुव इतिघञि वृद्धौ उपराव इति भवेत् । ततोऽभिन्नं कृत्वा पदं पश्चादन्वयो ज्ञेयः । **अधिषवणे** सोमकाण्डनिष्पीडनजनितरसैः क्रियमाणे यज्ञांगे । **द्रोणाकारः कलशः** सुखतः पानसाधनम् । कृवृइत्यादिना नः द्रोणः । **वायव्यानि** श्वेतपशुकरणकानि वायुदेवताकानि कानिचित्कर्माणि । वाच्छय्वृतु पित्रुषसोयदिति यत् । **पूतं** संस्कारादिना पवित्रं चर्वादि बिभर्तीति तत्तथा । पूङश्चेति विकल्पादिभावे क्तेच पूतमिति भवति । भृञः किपि भृदिति । **आधवनीयः** । धूमध्वजधमननिर्मितसुषिरवेणुः । ऊदगोलवीति कानडी । **आग्नीध्रम्** । अग्निधा॒रणसाधनमायसम् । लोहमयं वा । ईदिति योगविभागादग्निशब्दस्य दीर्घः । **हविर्धानं** सर्पिष्पात्रं डुधातोरसिः । **गृहाः** पत्नीशालादयः । **सदः** सभा । अन्येभ्य इत्यसुन् । **पुरोडाशः** चरवः । पुरः दास्यन्ते दीयन्ते इति पुरोडाशाः घृतान्नादिभागाः । मन्त्रे श्वेतवहोक्थशस्पुरोडाशे ण्विन् । दकारस्य डश्च । पुरोडाः पुरोडाशौ पुरोडाशः । **पचताः** शामित्रादयः भृमृदृशियजिपर्विपच्यमितमीत्यादिना पचेरतच् । अवभृतः । सप्ततन्तु समाप्त्यनन्तरं क्रियमाणामृताभिषेकादिः । अवे भृञ इति डुभृञ् धारण पोषणयोरिति भृञः क्थन् । **स्वगाकारा** यथानाम देवानामाहुतिसमर्पकः शंयुवाकः ॥ ८ ॥

**अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मे दितिश्च मेऽदितिश्च मे द्यौश्च मे शक्करीरंगुलयो दिशश्च मे यज्ञेन कल्पंताम् ऋक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च मे ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम् ॥ ९ ॥**

**अग्निश्चीयमानघर्मो** मदीयः ॥ प्रवार्यो वा । **अर्कः** सूर्यः । कृदाधारार्चि-कलिभ्यः क इति कः । तद्देवतको यागो वा । रुद्रायार्कवते पुरोडाशमिति विधानात् । **सूर्यः** सौर्यं चरुमिति विहितश्चरुहोमः । **प्राणो** वायव्यो यागः । **अश्वमेधः** तन्नामको यागः । अधः पातालं तत्रत्यशेषकूर्मादयः । **पृथिवी** धरा। तदभिमानिभूरूपिणी रमा । **दितिरदितिश्चे**ति कश्यपभार्ये । सुरासुरसंयोजनवियोजनार्थं देवपूर्वदेवमात्रोः कल्पनप्रार्थनमितिभावः ॥ **द्यौरूर्ध्वलोकः सरस्वतीभारत्यौ** च । **शक्वरीः** । उपलक्षणया सर्वछन्दांसि तदभिमानिनी रमा च । स्नामदिपद्यर्तिपॄशकिभ्यो वनिपिति शकिधातोर्वनिपि वनोरचेति ङीब्रयोः शक्वरीति भवति । शक्वरीछन्दसां भेदे नदीमेखलयोरपीति मेदिनी । **अङ्गुलयः** । अङ्गुल्यभिमानिनो देवाः । यद्वाङ्गुलयः दशसंख्याका **दिशः** । चाद्विदिशः । अङ्गेरुलिरित्युलिः । **यज्ञेन** तन्नामकेन भगवता **कल्पन्तां** फलोन्मुखा भवन्तु । तेषां स्वतः सामर्थ्याभावोपपादनार्थमेतत् । मत्कृतपूजया इति वा । अङ्गुलयोऽगुलिसमाकारनारायणरूपाणि वा । 'देहाङ्गुष्ठमितो देहे जीवांगुष्ठमितो हृदी'तिवचनात् सामान्याङ्गुलि-शब्दस्याङ्गुष्ठपरतोचिता । **ऋक्** ऋग्वेदः प्रथमोत्पन्नत्वात् पूर्वमुक्तिः । **साम्न** ऋगादिरूढत्वादनन्तरमुक्तिः । **सामे**ति शस्त्रम् । **स्तोमे**ति स्तुतिरूपमिति स्तोत्रशस्त्रयोरपि संग्रहः । **यजुर्यजुर्वेदः** । अयज्ञांगत्वान्नाथर्वग्रहः । यद्वा सामेति सामवेदः । स्तोमेत्यथर्वा । 'ऋग्यजुःसामथर्वाश्चे'ति स्मृतेः । यद्वा सामेति समाधानवचनम् । तेन न बृहद्रथन्तरे इत्यनेन पुनरालापः । **दीक्षा** सीमोल्लङ्घनाद्यभावपूर्वको यजमानसंस्कारः । **तपः** पापनाशकोऽनशनादिः । अथवा भागवतगुणालोचनम् । **ऋतुर्वसन्तादिकालः** । **व्रत**मेकादश्युपवासादि । यज्ञकरणकालेऽसंभाष्यभाषणाद्यभावो वा । **अहोरात्रयोर्वृष्ट्या** धृतादिवर्षणेन पृथिव्याद्यभिमानिन्यो देवताः कल्पन्तामित्यध्याहारेणान्वयः । अहः सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेरित्यच् । रात्रान्हाहाः पुंसीत्यहोरात्राविति

पुंस्त्वंच जातिरप्राणिनामित्येकवद्भावाभावेन । स नपुंसकमिति नपुंसकता भावेन ज्ञेयम् । मदीयं सस्यं कल्पतामित्यध्याहृत्य व्याख्यानान्मन्दफल-सस्यकल्पनमपेक्षया मासपरइति मन्दधीर्ज्ञेयः । देवतातोषणं चावश्यकमित्येव देवतोषणं विदुषामिति ज्ञेयम् । **बृहच्चरथन्तरंच** ते द्वे सामनी कल्पेतामिति भावो मम स्वगानफलप्रापके भवेतामिति प्रार्थना । 'वेदानां सामवेदोऽस्मी' ति श्रीभगवदुक्तेः पुनश्चाप्युक्तिः । वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्चेति बृहदिति रथेन तरतीति रथन्तरं साम । संज्ञायां भृतॄवृजिधारिसहितपिदम इति खच् । ततो मुमि रथन्तरम् । **यज्ञेन कल्पेतामिति** पूर्ववत् ॥ ९ ॥

**गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्टवाट् च मे पष्टौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वांश्च मे धेनुश्चम आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पता-मपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पता॑ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ॥ १० ॥**

**गर्भाः** गर्भेभवाः कलिलादयः । अर्तिगृभ्यां भन्निति गर्भेति भवति । वत्साः पुत्राद्याः । वृतॄवदित्यादिना वदेः से वत्स इति भवति । पुत्रादौ तर्णके वर्षे वत्सं क्लीबन्तु वक्षसीति त्रिकाण्डशेषः । **त्र्यविः** सार्धसंवत्सरः पुंगभवः । त्र्यवी तथाविधा गौः । **दित्यवाट्** वर्षद्वयवान्वृषभः । **दित्यौही** तथाविधा गौः । वाह ऊठि उगित्वात् ङीष् । **पञ्चाविः** सार्धवत्सर वृषभः । **पञ्चावी** तथाविधा गौः । त्रिवर्षो वृषभस्त्रि**वत्सः** तथाविधा गौरन्या । सार्धत्रिवत्सरस्तु**र्यवाडृ**षभः । तथाविधा गौरितरा । **पष्टवाट्** चतुःसंवत्सर वृषभः । परा गौः तादृशी । तरुणो वृषभ **उक्षा** रेतःसेकपटुः । वंध्या **गौर्वशा** । पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीति तत्पुरुष-

कर्मधारयं विदधता निपातिता वशादिशब्दाः । उक्ष्णः किंचिदधिक **ऋषभः** । **वेहदास्कन्दितगर्भागौः** संश्चतृपद्वेहदिति निपातनात्धन्तेष्टि लोप इत एच । विशेषेण हन्ति गर्भमिति **वेहत्** । **अनड्वान्** शकटवाहकः । **धेनु**र्धेट्पाने धेट इच्चेतीकारे गुणे नौ च धयति तामिति धेनुः । **आयुः** प्रसिद्धम् । प्राणादि वाक् पर्यन्तं स्पष्टार्थम् । **आत्मा** शरीरं जीवो वा । **यज्ञो** मत्कृतः । **यज्ञेन** यज्ञनामकभगवता । यज्ञं महेन्द्रमिति रामायणोक्तेः । यज्ञो विष्णुर्देवतेति हि श्रूयते । यज्ञो यज्ञेनेति वदन्ती पूर्वोदाहृतस्य सर्वस्य भगवदेकलभ्यत्वं सूचयामास ॥ १० ॥

**एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशितिश्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशश्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे वाजश्च प्रसवश्च क्रतुश्च सुर्वश्च मूर्धा च व्यश्नियश्चांत्यायनश्चांत्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥ ११ ॥**

हनूमान् किंपुरुष इदानीं यज्ञेनेतिप्रसक्तोत्तमपुरुषैकाद्याकृति मारभ्यानन्ताकृतींश्चिन्तयन् गायन्नास्त इत्युत्तरकाण्डकथाशेषकथनेन समापयति । **एकाचेति** । यद्वा विश्वामित्र एव सकलाकृतीरेकस्मृत्युपारूढाः करोतीत्याह ॥ एकाचेति ॥ एका श्रीनारायणकृतिः । सर्वाकृत्यविशेषाभेदादियमुक्तिः । च शब्दोऽनुक्तसंग्राहकः । तेनात्मान्तरात्माकृती ग्राह्ये । 'आत्मान्तरात्मेति, गुहांप्रविष्टावात्मानौ हि तद्दर्शनादिति स्मृतिसूत्रमूलमुक्तं भवति । **तिस्रः** सृष्टिस्थितिसंहारकारिण्यः । त्रिवेदप्रतिपाद्या वा । त्रियुगप्रवर्तकाकृतयो वा । त्रिचतुरोस्त्रियां तिसृचतसृ । निर्देशक्रमापेक्षयार्थक्रमो ज्यायानिति यथासंभव-

मन्वयः पदानामिति ज्ञेयम् । **चतस्रो** वासुदेवाद्याः । सङ्कलय्याह । **पञ्चेति** । नारायणसङ्कर्षणान्ताः । ष्णान्ता **षट्** । षड्भ्यो लुगिति जसो लुकि पञ्चेति ज्ञेयम् । पञ्चेत्यस्यैकेत्यस्यावृत्तौ षट्आकृतयो लभ्यन्त इति नानुक्तिदोष इति ज्ञेयम् । नारायणो विष्णुरिति द्वे पूर्वोक्ताश्चतस्र इति षडाकृतयः प्राक्तिस्र इत्युक्ताश्चतस्र इत्युदिता मिलिताः **सप्त** । सप्यशूभ्यान्तुट्चेति सप्तेति । **अष्टौ**च मूर्तयः रसादिस्थिता आकृतयः रसाघनरसानलानिलवियद्विवस्वद्विधुप्रयष्टृषु विद्यमाना अपि भवदीया एव न तु भवस्येति दर्शयति । रामस्य साक्षात्स्वामित्वं पामरामरदृष्टच्चेति तदाकृतिं विहाय संगृह्य च **नव** मत्स्याद्याः **दशेति** ज्ञेयम् । ततश्च नव विना रामं दश सह रामेणेति ज्ञेयम् । **एकादश** नारायणेन सह । **द्वादश** केशवादि दामोदरान्ताः । एकादशेति प्रागेकादशभ्य इति निर्देशादादिति योगविभागाद्वाऽऽकारे भवति । द्व्यष्टनः संख्याया-मबहुव्रीह्यशीत्योरित्यात् । द्वौ च दश चेति वा द्व्यधिका दशेति वा विग्रहः । मूलरूपेण सह **त्रयोदश** । त्रेस्त्रयः सस्य रौ उत्वे च गुणे त्रयोदशेति भवति । नवानां पञ्चानां मेलने वा दशानाञ्चतसॄणां वा मेलने चतुर्दशाकृतयः संपद्यन्ते **चतुर्दश** लोकपालकाकाराः । **पञ्चदश** दशेन्द्रियप्रेरकाः पञ्चभूतप्रेरकाः । नारायणेन सह **षोडश** ष उत्वे गुणे दशेति दकार डकारे षोडशेति ज्ञेयम् । प्रसंगादुक्तिः । सप्तदशात्मान्तरात्ममेलनेन दशाष्टौचेत्य**ष्टादश** नव दश **चैकोनविंशतिः** । केशवादौ वासुदेवप्रद्युम्नानिरुद्धसंकर्षणत्यागे **विंशतिः** । पंक्ति विंशतीत्यादिना निपाताद्विंशतिरिति भवति । एकेनाधिकेन सहिता विंशतिः सप्तानां तिसृणां द्वादशानाञ्च मेलने मत्स्यादिदशकं केशवादिदामोदरान्ताकारा ज्ञेयाः । मूलैकरूपेण सह **त्रयोविंशतिः** । **चतुर्विंशतिः** केशवाद्याः । मूलेन सह **पञ्चविंशतिः** । "पुरुषो व्यक्तंच महानहङ्कारो मनस्तथा । दशेन्द्रियाणि शब्दाद्याः भूतेताः पञ्चविंशतिरि"त्यादि श्रीमदुक्तप्रकारेण । तत्तत्वगत-भगवद्रूपाणि वा ज्ञेयानि । नवदशेत्युक्तैकोनविंशत्याकारैः सह सप्तानां मेलने

**षड्विंशत्याकाराः** दशावरणका दशेन्द्रियपञ्चभूतनियामककाकारा एको मूलरूपी चेति षड्विंशतिः । नवावरणपक्षे चैकादशेन्द्रियाणि ग्राह्याणि दशावरणैकादशेन्द्रियनियामककाकारैः सह **सप्तविंशतिः** । **अष्टविंशतिः** केशवादिभिः **स्वव्यतिरेकेण सह द्वादशाकारैः** वासुदेवादयश्चत्वारः एवमष्टाविंशतिः । मूलेन **सहैकोनविंशतिः** । आत्मान्तरात्मरूपाभ्यां सह **त्रिंशतिः** । मूलेन चाधिक **एकत्रिंशत्** । वासुदेवादि चतुर्मूर्तिषु वासुदेववासुदेव वासुदेव प्रद्युम्न वासुदेवानिरुद्ध वासुदेवसंकर्षणा इति चत्वारो भागाः । एवमेव प्रद्युम्नादिषु ततश्च षोडशाकाराः नारायणेऽप्येवमिति **द्वात्रिंशदाकाराः** ज्ञेयाः । मूलेन सह **त्रयस्त्रिंशत्** । मूलत्यागेन द्वयोः संबन्धे **चतुस्त्रिंशत्**तेनच सह **पञ्चत्रिंशत्** मत्स्यादि दश केशवादि चतुर्विंशतिभिः सहरूपद्वयमिति **षट्त्रिंशत्**। दिङ्मात्र प्रदर्शनं कृत्वा क्रमेण बोधने मन्दा इयत्तां बुध्येयुरिति कृपणधृणापरायणा श्रुतिः क्रममविगणय्याकारान् वक्ति । **चत्वारिंशच्चेति** । (चतस्रो विंशतय इति चत्वारिंशत्) केशवादि २४ मत्स्यादि १० पूर्वाक्ताः षट् ६ इति ४० । मत्स्यादि १० । आवरण १० । केशवादि २४ । ४४ । ४८ चतुराधिक्ये अष्टाचत्वारिंशत् । त्रिभाषा चत्वारिंशत् प्रभृतौ सर्वेषामिति भवति चाष्टाचत्वारिंशदिति । अष्टगुणो अष्टबाहुरिति श्लोकव्याख्यायामष्टशब्दो अशूव्याप्तौ इति व्याप्तभुजगुण इति प्रतिपादितं तद्वदत्रापि अष्टेत्यस्य व्याप्तेत्यर्थः संभवति । अष्टेति व्याप्तोच्यते । चत्वारिंशदाकृतिरेव व्याप्तानंताभूदिति वा । **वाजो**ऽन्नादिदातृरूपम् । **प्रसवः** सष्ट्यादिकारणरूपम् । **अजो**ऽहीनयोनौ जातोऽपि प्रसवादिहेतुरूप एव नतु स्वाचरितैनैनसासदिततनुर्मनुजनुरिव परतन्त्र इति भावः । **क्रतु**र्ज्ञानात्मकः । **सुवः** सुवर्लोकगतः । **मूर्धा** देवोत्तमोत्तमः । **व्यश्नियः** निराहारादिसदाचारप्राप्यकर्मफलभोक्ता नेति वा व्यश्नियः । 'अनश्नन्नन्यो अभिचाकशीतीति श्रुतेः । अन्ते लिङ्गभङ्गानन्तरं भवदत्यं तदंत्यमयनं मोक्षो यस्मादिति मोक्षदाता राम इति भावः ।

यद्वा अन्त्यं हनुमतोऽन्ते वायुत्वावसाने भवं स्वायंभुवं पदं तदाययति प्रापयति इति तदायनः । **अन्त्यः** सर्वावसाने भवः । 'एकोनारायण आसीन्नब्रह्मा नच शङ्कर' इति श्रुतेः । **भौवनो** जगद्व्याप्य तदन्तर्बहिरपि वर्तत इति भौवनः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति श्रुतेः । **भुवनः** भुवनं जगदस्त्यस्मिन्निति भुवनः । भूसूधूभ्रस्जिभ्यश्छन्दसीति भुवो क्युन् । अनादेशः । 'यो मां पश्यति सर्वत्र सर्वंच मयि पश्य'तीत्यादेः । स्वोपास्यबिंबैक्येन सर्वोपास्तिरेव प्रकटफलकारिणीति स्वोपास्यबिंबभूतनाथं श्रीरघुनाथं हनुमान्मुनिर्वा प्रत्यक्षसिद्धं प्रार्थयत् इत्याह । **अधिपतिश्चेति** ।। मम स्वामी सर्व स्वामी राम इष्टप्रापकः स्यात् । अत एव 'रामं च रक्षःक्षपणं पतिं म' इति रामायणेऽपि पतिशब्द एवान्ते प्रयुक्तः । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' । 'स आत्मना आत्मानमुधृत्यात्मन्येव विलापयत्यथात्मैव भवति' । 'स देवो बहुधा भूत्वा निर्गुणः पुरोषोत्तमः । एकीभूय पुनः शेते निर्दोषो हरिरादि'कृदित्यादि श्रुतिस्मृतिभ्यः । वाजश्चमे प्रसश्चमे इत्याद्युपक्रमः । वाजश्चमे प्रसश्चम इत्याद्युपसंहारश्चेत्येकरूपता ज्ञेया । एकादयः संख्यार्थ इति व्याख्यात्परो न संख्यावानित्यसंख्यसंख्यमुख्यपक्षोपजीविभिरुपेक्षणीयः । निर्विशोषित-संख्याकल्पनमात्रस्याफलत्वात् । वाजोऽन्नं प्रसवस्तस्योत्पत्तिरपिजस्तस्य पुनःपुनरुक्तिरितिवदतः परस्य पुनर्भाषणं नाभादिति सन्तोष्टव्यम् । अथ वाजादयश्चैत्रादिमात्रगोत्रविशेषा इति मतिं विशिशेष । तस्य मूलं मृग्यम् । उपक्रमोपसंहारयोरनानुगुण्यं च तत्पक्षे । अथवैकादयः समिधः पञ्चदश सामिधेनीरनुब्रूयात्सप्तदशसामिधेनीरित्यादिवाक्यातत्तद्यागभेदेन समिधादि भेदो बोध्यः । एवं स्तोतुर्हरी रामः किं करोति प्रीत इत्यतोऽनुवाकशेषेण फलमाह । वसोर्धारामिति । योऽधिकारी वसोर्घृतादेः धारां द्रव्यादिधारां ज्ञानधारां वा अग्नौ विषु स्वस्मिन्वा जुहोति तेन प्रीतो रामः वसोर्द्रव्यादेर्धारां सन्ततवर्षणं यथेच्छमिति यावत् । जुहोति ददाति हु दानादानयोः । श्रीराम

कृपातः यजमानस्य स्वर्गोपलक्षितं मोक्षादिसुखादिप्रियाणि ऐहिकलौकिकानि च संपद्यन्त इति वाक्यशेषार्थ इत्यशेषार्थ इत्यशेषमतिमङ्गलम् ॥ ११ ॥

गुरुराजहृदंभोजमन्दिरो दयितेन्दिरः ॥ अनया पदरत्नावल्या प्रियताद्धयकन्धरः ॥ मे शक्तिर्नास्य संपूर्तिकृतौ किन्तु मयि स्थिताः । निपुणाः सत्यसन्धांघ्रुदकोदितरजः कणाः ॥ २ ॥

श्रीवादिराजगुर्वंतर्गतार्ववदनः प्रसीदतु । श्रीमन्निसर्गकृपाकूपारसत्यबोध-गुरवे निजभजकामरतरवे नमो नमः ।

इति श्रीमन्नवरत्नमुद्गलार्यछात्रपुमुत्तमेन रचितायां चमकव्याख्यायां ललितपदमञ्जर्यां यथार्थप्रकाशिन्यां यजुः संहितायामेकादशोऽध्यायः ॥ ११ ॥

श्रीकृष्णार्पणमस्तु ॥ श्रीलक्ष्मीनृसिंहाय नमः ॥ श्री वेदव्यासाय नमः ॥ श्री मध्वेशाय नमः ॥ श्रीमज्जयतीर्थपूज्यचरणेभ्यो नमः ॥

## ನಮ್ಮ ಪ್ರಕಟನೆಗಳು

| | | |
|---|---|---|
| 1. | ಸಂಧ್ಯಾರಹಸ್ಯ | 10.00 |
| 2. | ಪೂಜಾರಹಸ್ಯ | 60.00 |
| 3. | ಮಾಂಡೂಕೋಪನಿಷದ್ಭಾಷ್ಯಂ | 75.00 |
| 4. | ಸಂಧ್ಯಾರಹಸ್ಯ (ತಮಿಳು) | 20.00 |
| 5. | ಪೂಜಾರಹಸ್ಯ (ತಮಿಳು) | 25.00 |
| 6. | ಸುಮಧ್ವವಿಜಯ (ತಮಿಳು) | |
| 7. | ಸದಾಚಾರಸ್ಮೃತಿ | 10.00 |
| 8. | ಶ್ರೀಮದ್ಭಾಗವತಸಾರೋದ್ಧಾರ (ಕನ್ನಡ ಅನುವಾದ) | 50.00 |
| 9. | ಶ್ರೀಮನ್ನ್ಯಾಯಸುಧಾಸ್ತುತಿ | 6.00 |
| 10. | ಶ್ರೀರುದ್ರವ್ಯಾಖ್ಯಾನಮ್ | 30.00 |
| 11. | ಶ್ರೀಮದ್ಭಾಗವತ ನವಮಸ್ಕಂಧ | 75.00 |
| 12. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 1 | 100.00 |
| 13. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 2 | 125.00 |
| 14. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 3 | 65.00 |
| 15. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 4 | 80.00 |
| 16. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 5 | 175.00 |
| 17. | ಪ್ರಮೋದತರಂಗಿಣಿ (ಕನ್ನಡ) | 30.00 |
| 18. | ಗೀತಾಪ್ರತಿಪದಾರ್ಥಚಂದ್ರಿಕಾ | 75.00 |

**ಪುಸ್ತಕ ದೊರೆಯುವ ವಿಳಾಸ :**

**ವ್ಯವಸ್ಥಾಪಕರು,**

**ಶ್ರೀಜಯತೀರ್ಥ ವಿದ್ಯಾಪೀಠ, ಶ್ರೀಮದುತ್ತರಾದಿಮಠ,**

**ಬಸವನಗುಡಿ, ಬೆಂಗಳೂರು - 560 004.**